*Prachyabharati Series—22*

# THE MĪMĀṂSĀ DARŚANA

OF

## MAHARṢI JAIMINI

With Śābarabhāṣya of Śabaramuni with the commentaries Tantravārtika of Kumārila Bhaṭṭa and its commentary Nyāyasudhā of Someśvara Bhaṭṭa, Bhāṣya-vivaraṇa of Govindāmṛtamuni and Bhāvaprakāśikā, the Hindi translation by Mahāprabhulāla Gosvāmī.

*Foreworded by*
Prof. SRI BADARI NATH SUKLA
Former Vice-Chancellor
Sampurnanand Sanskrit University
Varanasi.

*Edited with an Introduction by*
Prof. MAHĀPRABHULĀLA GOSVĀMĪ
M. A., Ph. D., D. Litt Nyay-Vyakarna Sahitya-Vedantacharya, Mimamsa Shastri (Gold Medalist)
PROF. & HEAD, Department of Philosophy
Sampurnananda Sanskrit University, Varanasi

**Volume II**

TARA PRINTING WORKS
VARANASI

प्राच्यभारतीग्रन्थमाला—२३

टीकापञ्चकसनाथीकृतं महर्षिजैमिनिप्रणीतं

# मीमांसादर्शनम्

भट्टसोमेश्वरकृतया न्यायसुधाख्यटीकयोद्भासितया
श्रीकुमारिलभट्टनिर्मितया तन्त्रवार्तिकव्याख्ययालङ्कृतेन
श्रीगोविन्दामृतमुनिविरचित-भाष्यविवरणव्याख्यया भूषितेन
श्रीमहाप्रभुलालगोस्वामिकृतभाष्यभावप्रकाशिकाहिन्दीव्याख्यातेन
श्रीशबरमुनिविरचितभाष्येणानुगतम्

आचार्यश्रीबदरीनाथशुक्ल प्ररोचनया समेता

राष्ट्रपति सम्मानितेन एम० ए०, पीएच० डी०, डी० लिट्० इत्युपाधिविभूषितेन
न्याय-व्याकरणसाहित्यवेदान्ताचार्यमीमांसाशास्त्रिणा विद्यावाचस्पतिना
श्रीमहाप्रभुलालगोस्वामिना विस्तृतभूमिकयालङ्कृत्य
सम्पादितम्

द्वितीयो भागः

तारा प्रिंटिंग वर्क्स
वाराणसी
२०३४ तमो विक्रमाब्दः

# पण्डितप्रवराचार्यश्रीबदरीनाथशुक्लमहोदयानाम्

## अभिमतिः

दर्शनशास्त्रं भारतीयमनीषायाः महनीया उपलब्धिः । दृश्यते अधिगम्यते अनेनेति व्युत्पत्त्या दर्शनशब्दोऽधिगमसाधनमभिधत्ते, अधिगमशब्दश्च सविषयार्थकतया स्वविषयभूतमर्थं स्मारयति, स चार्थः यो निखिलजनस्पृहणीयस्य निःश्रेयसस्य साधकभूतः, वैदिके, समग्रे वाङ्मये च धर्मब्रह्मणोः याथार्थ्येन परिज्ञानमेव निःश्रेसाय कल्पते । अनयोरुभयोः प्रतिपादकः शब्दराशिः ब्रह्मप्रतिपादकतया दर्शनशब्देन धर्मप्रतिपादकतया च शास्त्रशब्देन व्यवह्रियमाणतां प्राप्य दर्शनशास्त्रमिति संज्ञां लभते ।

मीमांसाशब्दः पूज्यविचारबोधकतयाऽभियुक्तैरभ्युपेतः, विचारस्य पूज्यता, विचार्यस्य पूज्यतायत्ता, मीमांसाया विषयभूते धर्मब्रह्मणी निर्दिष्टया दिशा निःश्रेयसनिष्पादकतया निःसंशयं पूज्ये, तदालम्बनेन प्रवृत्ततयैव मीमांसायाः पूज्यविचारत्वम् ।

विषयभेदेन मीमांसा द्विविधा, पूर्वमीमांसा उत्तरमीमांसा च । तयोराद्या निरुपपदेन मीमांसाशब्देन, द्वितीया च वेदान्तशब्देन व्यपदिश्यते, तत्र मीमांसा परम्परया वा धर्मपराणि वेदवचांसि विशदयति, वेदान्तश्च ब्रह्मप्रतिपादकपराणि उपनिषत्संज्ञकानि वेदवचनानि व्याचष्टे ।

मीमांसादर्शनं महर्षिणा जैमिनिना प्रणीतं द्वादशाध्यायेषु प्रसृतम्, यदाश्रित्य भाष्यवार्तिकप्रभृतयोऽनेके व्याख्याग्रन्था विद्वद्भिः व्यरचिषत, वेदान्तदर्शनं बादरायणेन रचितं चतुर्ष्वध्यायेषु विततम्, यदाश्रयेण भाष्यभामतीप्रभृतयो महनीया ग्रन्था विपश्चिद्भिरग्रन्थिषत ।

प्रस्तुतं मीमांसादर्शनं धर्मप्रतिपादकतया निःश्रेयसप्रत्ययोपयोगितां दधानं लोकोपयोगितामपि बिभर्ति, यतो हि तत्प्रतिपाद्यो धर्मो 'धर्मो विश्वस्य जगतः प्रतिष्ठा', धारणाद्धर्मः, धर्मो धारयते प्रजाः, इत्यादिवचनैः विश्वधारकतया प्रजाधारकतया च समुदघोषि, धर्मो हि यथाशास्त्रमनुष्ठीयमानो भौमं दिव्यं च

पुरुषार्थं सम्पादयन्, अनुष्ठातारं निःश्रेयसेन योजयति, अतो मीमांसादर्शनस्यान्यसर्वदर्शनापेक्षया निरतिशयं महत्त्वम्, एतन्महत्त्वादेव तन्मूलकं वाङ्मयमतिविशालं सहस्राधिकश्रेष्ठव्याख्याविवरणादिग्रन्थबहुलम् ।

धर्मस्य तत्त्वं निहितं गुहायाम्, कर्मणो गहना गतिः, इत्याद्युक्तिः धर्मस्य दुर्बोधतायाः प्रसिद्धतया तत्प्रतिपादकस्य मीमांसाशास्त्रस्य दुरधिगमता निर्विवादा, दुरधिगमत्वादेव तत्र विद्वद्भिः विविधान् वृहतो लघूंश्च व्याख्योपव्याख्याग्रन्थान् रचयितुं प्रयत्नो व्यधायि ।

वर्तमाने समये संस्कृतशिक्षायाः विरलप्रचारतया संस्कृतवाचोऽवबोधे जनानां दुर्बलतया आकलय्य पण्डितप्रवरेण श्रीमता महाप्रभुलालगोस्वामिना भाष्यभावप्रकाशिकाभिधया हिन्दीभाषया तदर्थस्पष्टीकरणमावश्यकमन्वभावि, स्वकीयप्रतिभावैभवबलेन च तत्र प्रशंसनीयं साफल्यध्यवापि, प्रकृतं प्रकाशनं केवलसंस्कृतभाषायामप्रगल्भानां हिन्दीविदामेव हिताय न भवेत्, किन्तु संस्कृते प्रौढप्रज्ञानां पण्डितपुरुषाणामपि मनोमोदाय भवितेति धिया अत्र शबरमुनेः भाष्यस्य कुमारिलभट्टस्य तन्त्रवार्तिकस्य भट्टसोमेश्वरस्य न्यायसुधायाः गोविन्दामृतमुनेः विवरणस्यापि समायोजनमकारि ।

अहमीदृशस्य महतो ग्रन्थस्य बहुजनवेद्यतासम्पादनप्रयासाय मेधाविनं श्रीगोस्वामिनं सानन्दमभिनन्दामि तारायन्त्रालयस्वामिनं पण्ड्या श्रीरमाशङ्करमहोदयं चैतस्य प्रकाशने औदार्यालम्बकाय सम्भाजयामि ।

आचार्यबदरीनाथशुक्लः

# प्रस्ताविकम्

अपौरुषेयस्य वेदस्य मीमांसापि अपौरुषेयैव । कदाचित् राज्यसञ्चालनार्थं समाजस्य परिनिष्ठितस्वरूपस्याभिवृद्ध्यर्थमनुशासनक्रमेषु दर्शनस्य महान् समादर आसीत् । धर्मप्रधानमेतद्भारतवर्षम् । जन्म एव धर्मसाधनार्थमन्येषाञ्च धर्मे प्रवृत्त्यर्थञ्च, भोगस्य सर्वथाऽकिञ्चित्कारत्वात् । मृत्युपर्यन्तं धर्मानुगृहीतं कर्म लोकानां वर्तत इत्यत्र नास्ति काऽपि विप्रतिपत्तिरिति जानन्ति सारस्वतबान्धवाः । स्वाध्यायाध्ययनविधिना कृतेऽपि वेदाध्ययने वेदवाक्यमननार्थं मीमांसितधर्मतत्त्वावगत्यर्थं गुरुकुले वासपूर्वकं मीमांसादिशास्त्राणामध्ययनमपि तथैवापरिहार्यमिति विचारानन्तरमेव गुरुगृहादागत्य गृहस्थाश्रमे प्रवेशस्य नियम आसीत् ।

'अथातो धर्मजिज्ञासेति सूत्र-व्याख्यानावसरे शबरस्वामी सुस्पष्टमभिदधाति 'गुरुकुलान्मा समावर्तिष्ट कथं नु वेदवाक्यानि विचारयेदित्येवमर्थोऽयमुपदेशः । ·· वेदमधीत्य त्वरितेन न स्नातव्यम्, अनन्तरं धर्मो जिज्ञासितव्यः' (शाबरभाष्यम् १।१।१ एतावता ज्ञायते यत् मीमांसादिदर्शनशास्त्राध्ययनमपि नित्यविधिविहितमेवासीदिति प्रस्थानमेदस्य रुचिवैचित्र्यमूलकत्वात् 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तितः' इति कर्णाकर्णिकयोपलब्धवचनेन वेदमीमांसात्मकानां दर्शनानामपि गुरुगृहे वासपूर्वकमेव विचारो नियत आसीत् ।

'रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।'

इति पुष्पदन्तवचनेन केनापि पथा गच्छतां परिशेषे यथा सागरे एव जलानां गमनं भवति तथैव स्वात्मरूपावाप्तिरेवावशिष्यते । व्यवहारः धर्मानुरूपाचरणमेवोत्कृष्टं पुष्पं फलमित्यत्र नास्ति विवादावसरः । फलार्थमाम्रपोषणं परं छाया-गन्धादिकञ्चानुषङ्गिकरूपेणोपलभ्येते, विहितकर्माचरणजन्यधर्मेणार्थानामानुषङ्गिकी प्राप्तिरिति कथन्नामार्थावाप्तिः निवार्यमाणा भवेत्, यदि धर्माचरणं न क्रियते तदाऽग्रजस्य धर्मस्यावमानेन तदनुजानां व्याकोपस्यनिराकरणकथैव वृथेति । विद्याध्ययनं न केवलं स्वात्मज्ञानार्थं परलोकमात्रप्राप्त्यर्थम्वाऽपि तु कृतविद्यो ब्रह्मचारी शास्त्रज्ञानेन धर्मानुष्ठानेन पोष्यवर्गाणां परिरक्षणं समाजानुरञ्जनात्मकञ्च परमं प्रयोजनमनुगृह्णाति । यथेदानीं विनैव मननमनवगतशास्त्रार्थोऽवश्यकर्तव्यत्वमननुसन्धाय आगमस्वाध्यायव्यवहारात्मकत्रिरत्नशून्यः लोकानामुपदेशाय सर्वथा सन्नद्धस्तिष्ठति, अहो विचित्रैव कुटिलपथजुषां शास्त्रभ्रष्टानां वराकाणां गतिः, नूनमेवान्धस्येवान्धलग्नस्य पदे पदे विनिपातः सुनिश्चितः दृश्यते च प्रतिक्षणमनधिकारिणां राजनीत्यादिज्ञानशून्यानां गतिस्तदनुयायिनाञ्च

पथपारिभ्रष्टानामहमहमिकयाहोपुरुषिकामात्रसम्पन्नानां गुरुजनालोचकानां छात्राणां प्रमाणपत्रपरिमण्डितानामपि दुर्गतिरिति । शास्त्रे पोष्यवर्गपरिरक्षणमेव धर्मानुष्ठानस्य फलम्, पोष्यवर्गश्च मनुनैवोक्तः—

> पिता माता गुरुर्भ्राता प्रजादीनाः समाश्रिताः ।
> अभ्यागतोऽतिथिश्चैव पोष्यवर्गा उदाहृताः ॥ (मनु० ७।१३४)

'श्रुतवृत्ते विदित्वाऽस्य वृत्तिं धर्म्यां प्रकल्पयेत्' । (७।१३५) 'श्रुतवृत्ते' इत्यस्य व्याख्यानं 'शास्त्रज्ञानानुष्ठाने' इति तत्रैव कुल्लुकभट्टः । 'धर्म्यां वृत्तिं = यथा कुटुम्ब-स्वधर्मस्यावसादनं न भवति', (मेधातिथिः) अतः प्रजाधर्मं न व्यवच्छिन्द्येदित्येव मीमांसायाः प्रयोजनमिति राज्ये तादृशी समितिरासीद् दार्शनिकानामूहापोहकुशलानां मनीषिणामित्यवश्यकर्तव्यानुशासने नासीद्विरोधो न वारोपितपरम्परावादिविरोधिनामरोपित-पाण्डित्यानां शास्त्रज्ञानशून्यानां जनानां समाजेषु गुरुकुलेषु राजामात्यवर्गेषु च समादरः । उपदेशानधिकारिणश्च यतस्ते अधीतिबोधाचारणशून्या इति । शास्त्रज्ञानां मनीषिणां रक्षणचिन्ता च आसीत् समाजस्य राज्ञो वा यतस्ते धर्मसाधनायैव व्यापृतचित्ता आसन् 'संरक्षेत्सर्वतश्चैनं पिता पुत्रमिवौरसम्' (मनु० ७।१२५) ।

भोजराजकृतेन **'कामधेनु'** नामकेन स्मृतिसंग्रहाख्यग्रन्थेन एतदवगम्यते यत् एष एव स्मृतिशास्त्रस्य प्रथमः ग्रन्थ इति । एतद्ग्रन्थोपक्रमणिकायां ग्रन्थप्रणयनेतिवृत्तमेवादावुट्टङ्कितम् । भोजदेवस्य दौहित्रः प्रथितयशसो विक्रमादित्यस्य पुत्र उज्जयिनीश्वरो मतादित्य अकाल एव कालग्रस्तः समभवत् । श्मशानं प्रति संस्कारार्थं प्रस्थिते शरीरे कश्चिद्बौद्धो योगी अभिप्रेत-साधनस्योत्तमं योगमभिसन्धाय योगप्रभावेण तत्कायप्रवेशं कृतवान् । राजा श्मशाने जीवितः सञ्जात इति महानानन्दोत्सवः समजनि । कदाचिदसौ मतादित्यः यज्ञार्थं सन्नद्धः सन् प्रोवाच, भारतवर्षीयाः पण्डिताः स्वीयं धर्मशास्त्रीयग्रन्थमादायोज्जयिन्यामागच्छन्तु । धर्मशास्त्रीयग्रन्थानामालोचनपूर्वकं तेषामिहैकमत्योत्कृष्टयज्ञस्यानुष्ठानं भवितेति । अमात्यवर्गाणां प्रयत्नेन राजाज्ञायाः प्रतिपालनं सञ्जातम् । पण्डितानां निर्देशेन शिप्रातटे विपुल-यज्ञस्य व्यवस्था सम्पन्ना, यज्ञदीक्षादिनमप्यध्यवसितम् । मध्ये कस्मिंश्चिद्दिवसे कौशलेन राजधान्याः दूरदेशे पण्डितानां प्रस्थानं निश्चितम् । प्रस्थिते तद्दूरदेशे मतादित्यस्याज्ञाक्रमेण यज्ञेषु प्रदीप्ते वह्नौ धर्मपुस्तकानां विनाशः सञ्जातः । अनन्तरं बौद्धमतप्रचारे सर्वथा सन्नद्धः अत्याचारे प्रावर्तिष्ट । भोजराजः एतद्वृत्तान्तं कर्णाकर्णिकयाकर्ण्य कथमेतादृशी दौहित्रस्य दुर्मतिः समभवदिति भृशं चिन्तयन् गणनया सोमादित्यस्य मृत्युं तत्काये बौद्धप्रवेशञ्चावगत्य परकायप्रवेशविघटकं यज्ञानुष्ठानं प्रावर्तयत् । आरब्धे यज्ञे शरीरं प्राणवियुक्तं समजायत । अनन्तरं भारतीय शेषग्रन्थनिवहं संग्राह्य पण्डितः 'कामधेनुरिति' नामकं ग्रन्थं व्यरचयत् । तत्र कण्ठस्थविषयानपि समवेशयत् । कामधेनुप्रारम्भे एका विस्तृततालिकापि दृश्यते । अन्यापि ग्रन्थानां विनाशकथा नैव रोहिता ऐतिहासिकानाम् । एवमेव महा-

राष्ट्रेऽपि सह्याद्रिखण्डपुस्तकानां विनाशः समभवत् । अलेक्जेन्द्रियविख्यातपुस्तकालयोऽपि भस्मतां गतः ।

मीमांसा हि धर्ममीमांसैवेति अस्य शास्त्रस्य पुनरुज्जीवनं भट्टकुमारिलकृतमेवेत्यत्र नास्ति विचिकित्सावसरः । यदि वेदस्यापौरुषेयत्वं प्रामाण्यञ्च न स्यात्तदा का कथा वैदिकदर्शनानां भवेदिति तु मनसाऽप्यचिन्त्यमेव ।

अस्मिन् भागे अपूर्वस्य विध्यर्थस्य च प्राधान्येन समीक्षा वर्तते तत्रापूर्वस्यादृष्टेत्यादिभिः शब्दैरभिधानं तत्तदाचार्यनिवहैः कृतम् । अदृष्टस्य कार्यमात्रं प्रति कारणत्वञ्चाङ्गीकृतम् । पूजितविचारवचनस्य मीमांसाशब्दस्य प्रेयःश्रेयसोर्धर्मविचारः एवप्रवृत्तिनिमित्तम् । मीमांसाशब्दश्च बहुधा श्रुतिषु प्रयुक्तो वर्तते, तथा हि—'सैषा मीमांसाऽग्निहोत्र एव सम्पन्ना', 'सैषानन्दस्य मीमांसा भवति' । विना विचारञ्च सन्देहनिवृत्तिः प्रयोजनप्राप्तिश्च न सम्भाव्यते । मीमांसयेतिकर्तव्यताभागो नूनमेव ज्ञायतेऽत एवोक्तं भट्टपादेन 'इतिकर्तव्यताभागं मीमांसा पूरयिष्यति' । आचार्यः शबरो द्वादशाध्यायीमबीभषत् । भर्तृमित्रभवदासादिप्रणीता वृत्तय आसन् यासां नामेदानीं कर्णपथमपि नावतरति । शाबरभाष्यात्प्राचीनोपवर्षवृत्तिरासीदित्यभिप्रयन्ति, परं सापि नेदानीमुपलभ्यते । अधुना आचार्यकुमारिलपादैः रचिता द्वादशाध्याय्याः वृत्तय उपलभ्यन्ते, प्राभाकरं तु केषाञ्चिदेवोपलभ्यन्ते । प्रभाकरं गुरुरिति कथयन्ति जनाः । उभयोर्वैमत्यन्त्वनुपदेव स्फुटम् । प्रभाकरगुरुव्यपदेश एव कर्णाकर्णिकया श्रूयते, परं कौमारिलमतमेव सर्वत्राद्रियते, कौमारिलमतमवलम्ब्य रचितानां ग्रन्थानामपि वैपुल्यं वर्तते । कुमारिलपादस्य युक्तिश्च गूढतमा ।

अपूर्वः—तन्त्रवार्तिकेऽपूर्वस्वरूपनिरूपणप्रसङ्गे उक्तम् यत्—'प्रधानकर्मनामङ्गकर्मणां वा प्राक्करणात्स्वर्गादिप्राप्त्ययोग्याः पुरुषाः, क्रतवश्च स्वर्गकार्यायोग्याः । तामुभयीमप्ययोग्यतां व्युदस्य प्रधानैरङ्गैश्च योग्यतोपजन्यत इति असंशयं सर्वेणाभ्युपगन्तव्यम् । असत्यां तस्यामकृतसमत्वप्रसङ्गात् । सैव च पुरुषगता क्रतुगता वा योग्यता शास्त्रेऽस्मिन्नपूर्वमित्युपदिश्यते (तं० वा० पृ० )।

वेदे स्वर्गादिसाधनभूतानि अनेकानि कर्माणि विहितानि श्रुतिप्रामाण्यादेव एतदवगम्यते यत् तत्तत्फलस्य प्राप्तये इमानि कर्माण्यनुष्ठेयानि । तत्प्रामाण्यमवगत्य जनाः तत्तत्फलप्राप्तये विहितकर्मानुष्ठानाय तत्पराः भवन्ति । असिद्धस्वरूपाणि तत्तत्फलानि काम्यत्वेनाभीप्सितानि भवन्ति, तत्र वेदे यथाप्रतिपादितं तथा तत्तत्कर्मानुष्ठानेन तत्तत्फलान्युपभुङ्क्ते जन इति; परं कर्मानुष्ठानं त्वधुना क्रियते फलावाप्तिश्च आगतवति काले मृते वा सम्भव्यते । तथा तत्फलभोगेच्छुः तानि तत्तत्फलसाधनत्वेन निर्दिष्टानि यावन्नानुतिष्ठति तावदनुपलब्धकर्तृत्वः तत्फलभोगयोग्योऽपि न भवति । तामिमां कर्मनिष्ठां पुरुषनिष्ठाञ्चायोग्यतां दूरीकर्तुं तत्तत्कर्मणि स्वस्वाङ्गसहितान्यनुष्ठेयानि

भवन्ति। अनुष्ठितेष्वपि तत्तत्कर्मसु क्षणिकत्वात् तैः कर्मभिः कालान्तभावि फलं प्रति साधनत्वं तेषां न सम्भवति, यतः कारणेन यत्कार्यं जायते तदव्यवहितपूर्ववर्तिना कारणेनावश्यमेव भवितव्यम्। अग्निहोत्रादिकर्मणामनुष्ठानमधुना क्रियते, तज्जन्य-फलावाप्तिश्च मृत्योरनन्तरं बहुकालव्यवधानानन्तरं जायते। सन्ति एवंविधान्यपि वेद-विहितानि कर्माणि येषां फलमस्मिन्नेव जन्मनि जायते, परं तत्रापि कालकलानां व्यवधानं सोढव्यमेव, पुत्रपश्वादिफलजननेन कर्मणा कालकलाव्यवहितैव फलप्राप्तिरिति अनुष्ठानाव्यवधानेन न फलं जन्यत इति कथमपि तत्कार्यं प्रति तस्य कारणत्वं न संघटते। यदि कर्मानुष्ठासमनन्तरक्षण एव पुत्रपश्वादीनामुत्पत्तिर्भवेतदा कार्याव्यवहितपूर्ववर्तित्वं कारणस्य स्यान्नाम। तत्कार्यनिष्ठजन्यतानिरूपितजनकता तु वेदे श्रूयत एव तथा हि "स्वर्गकामो दर्शपूर्णमासाभ्यां यजेत", "चित्रया यजेत पशुकामः" "पुत्रेष्ट्या यजेत पुत्रकामः इत्यादिवेदवचनैः तत्कार्यं प्रति कारणत्वं तु सुस्पष्टमुक्तं वेदे। अतोऽर्थापत्ति-प्रमाणेन यागादिभिरुत्पाद्यः क्वचिदाश्रितः यावत्फलोत्पत्तिस्थितिमान् वस्तुविशेषः स्वीकर्तव्यः। तदुत्पन्नो वस्तुविशेषः योग्यं फलमुत्पाद्य विनाशमेति। स च वस्तुविशेष एव अपूर्वपदेनादृष्टपदेन वाभिधीयते। फलोत्पत्तये स्वीक्रियमाणोऽयमतिशयोऽपूर्वो वा फलमुत्पादयितुं स्थितस्सन् प्रभवति। किञ्च यागादिक्रियाव्यापारा न यज्ञेषु वर्तते, यतः स्वोत्पत्तितृतीयक्षणे एव तस्य विनष्टत्वात्, आश्रयनाशे च तदाश्रितस्यातिशयस्यापि नाशात् विफलं तत्कल्पनं स्यात्, तन्त्रवार्तिके उक्तम्—

> शक्तिः कार्यानुमेयत्वात् यद्गतैवोपयुज्यते।
> तद्गतैवाभ्युपेतव्या स्वाश्रयान्याश्रयापि वा॥ त० वा० पृ० ३४९।

स्वर्गयागयोः कार्यकारणभावस्यान्यथाऽनुपपत्त्या श्रुतार्थापत्तिप्रमाणगम्यत्वमपूर्वस्य। यद्यपि नैयायिकैरपि अदृष्टस्य कारणत्वमङ्गीकृतन्तथापि मीमांसाशास्त्रस्य प्रधानभूतोऽयं विषय इति। यतः "अथातो धर्मजिज्ञासा" इत्युपक्रमवाक्येन धर्मस्यैवादौ जिज्ञासा कृतेति। पुरुषो हि अन्येच्छानधीनेच्छाविषयत्वेन आत्मने सुखमभिलषन्नेव तत्साधन-मन्विष्यति, अनन्तरं निर्दिष्टफलप्राप्तये तत्साधनानुष्ठानाय प्रवर्तते कृतिमान् यथा-वत्साधनमनुतिष्ठति, अनुष्ठिते च सपरिकरे तत्साधने फलमुत्पद्यते। उत्पन्ने च फले यथायोग्यमुपभुङ्क्ते चानुष्ठाता। स्वर्गादिकं चेतिहासादितोऽवगत्य अधिकारिपुरुष-विशेषस्तमभिलषति इच्छँश्च तत्साधनं मृगयते, अनन्तरं श्रुत्याद्यध्ययनेन यागादिकं तत्साधनत्वेन जानाति, अवगत्यापि क्षणिकस्य तस्य कारणस्य कालान्तरभाविफल-साधनत्वे विचिकित्सन् तज्जन्यं कालान्तरभावि फलपर्यन्तमवस्थायिनं कञ्चन वस्तु-विशेषं शास्त्रसिद्धं विज्ञायानुष्ठाने प्रवर्तते, नात्र सन्देहो यत्स्वर्गादिफलान्तरालत्वेन यदि कश्चित्पदार्थो न भवेत्तदा स्वर्गादेः यागादिसाधनवकथैव वृथेति, यदि फलं न स्यात्तदा बहुवित्तायाससाध्ये यागादिकर्मणि केषामपि सचेतसां प्रवृत्तिर्न भवेदित्यवितथं वचः। यदि लोको न प्रवर्तेत वेदविहिते कर्मणि तदा वेदस्य प्रवर्तकत्वं विहन्येत, वैयर्थ्यञ्च

सम्पद्येत । "यतोऽभ्युदयनिःश्रेयससिद्धिः" (वै० द० १।१।२) इति सूत्रञ्च व्याकुप्येतातोऽपूर्वं स्वीकरणीयमेव । इदञ्चापूर्वं न केवलं विहितकर्मणः फलसिद्धये एवाङ्गीक्रियतेऽपि तु निषिद्धकर्मणोऽप्याचरणे नरकादि फल जननार्थमङ्गीकरणीयमेव । पापपुण्ययोरुभयोरपि अपूर्वशब्देन व्यवहारो भवति । धर्माधर्मशब्देन चैतयोरेव व्यवहारो जायते ।

प्रशस्तपादवचनमप्यनुसन्धेयमेव—'धर्मपुरुषगुणः कर्तुः प्रियहितमात्रहेतुः, अतीन्द्रियोऽन्त्यसुखसंविज्ञानविरोधी, पुरुषान्तःकरणसंयोगविशुद्धाभिसन्धिजः वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः, तस्य तु साधनानि श्रुतिस्मृतिविहितानि वर्णाश्रमिणां सामान्यविशेषभावेनावस्थितानि द्रव्यगुणकर्माणि' (प्र० भा० पृ० १३८) अधर्मोऽप्यात्मगुणः, तस्य तु साधनानि शास्त्रे प्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसानृतस्तेयादीनि' (प्र० भा० पृ० १४२) ।

एतेन फलोदयपर्यन्तस्थायी फलोत्पत्तिविनाश्यः अतीन्द्रियो धर्मः निषिद्धक्रियाजन्यश्चाधर्म इति तत्तत्फलोद्देशेन विधीयमानानां कर्मणां षाष्ठसर्वाङ्गोपसंहार-न्यायेन (पू० मी० ६।३।२) पूर्वोक्तराङ्गकलापसहितानामेवानुष्ठानं प्राप्तम् । तत्र श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यैः क्रमबोधकप्रमाणैः परिप्रापितक्रममनुसृत्यैवाङ्गान्यनुष्ठीयन्ते । येन क्रमेणानुष्ठानं तेनैव क्रमेणापूर्वोत्पत्तिः । तद्यत्र यदङ्गमनुष्ठीयते तदव्यवहितपूर्वक्षण एव तत्कृतमपूर्वं यजमानात्मनि जायते, तच्च संस्काररूपेण सन्तिष्ठते एतेषाञ्चाङ्गजन्यत्वादङ्गापूर्वाणीति नाम । एवं प्रधानयागानुष्ठानन्तरं प्रधानकर्मणोऽपूर्वमुत्पद्यते, एतस्योत्पत्त्यपूर्वं प्रधानापूर्वं वेति शास्त्रीयो व्यवहारो जायते । अङ्गापूर्वाणि प्रधानापूर्वाण्यपि जाआत्यमानानि मन्येव समवयन्ति । अन्तिमस्याङ्गस्यानुष्ठानानन्तरं सर्वाणीमानि मिलित्वा अपूर्वाणि किञ्चनापूर्वं परमापूर्वाभिधेयं तत्रैव संस्काररूपेण उत्पादयन्ति । परमापूर्वे तूत्पन्ने तेषामङ्गापूर्वाणां प्रधानापूर्वाणां नाशः । परमापूर्वमेव फलोत्पत्तिपर्यन्तमवस्थाय फलमुत्पाद्य विनाशमेति । तत्रापि विजातीयतत्तत्फलोद्देशेनानुष्ठीयमानेभ्यः कर्मभ्यो विजातीयतत्तत्फलजननशक्तिमन्त्येवापूर्वाणि यागकर्तुरात्मनि समवयन्ति ।

एतत्तु अनुसन्धेयम् यत् व्रीहियवतिलमाषबीजानामेकस्मिन् सुक्षेत्रे युगपत्परस्परमेलनेन एकत्वेऽपि सहकारिकारणसमवधाने सति स्वं स्वं कालं प्राप्य स्वस्वसामर्थ्यमनतिक्रम्य व्रीह्याद्यङ्कुराणामेवोपजननम्, न साङ्कर्येण व्रीहिभ्यो यवाङ्कुराणाम्, यवेभ्योऽन्याङ्कुराणाञ्चोत्पत्तिः, एवमेव स्वर्गपुत्रपशुवृष्ट्यादिविविधफलजनकापूर्वाणामेकत्र यजमानात्मनि समवधानेऽपि फलोत्पत्तिकाले तत्तदपूर्वेभ्यः तानि तान्येव फलान्युत्पद्यन्ते विनैव साङ्कर्यम् शक्तीनां तादृशस्वभावात् । उक्तञ्चाभियुक्तैः—

'शक्तयस्सर्वभावानां नानुयोज्याः कथञ्चन ।'

अतः यागाद्यनुष्ठानजन्यं निर्दिष्टफलजननसमर्थं कर्तुरात्मसमवेतं फलैकनाश्यं मीमांसकसिद्धान्तसिद्धमपूर्वमस्ति । अयमाशयः—

शब्द एव धर्मे प्रमाणम्, शब्दश्च वाक्यात्मकः। वाक्यञ्च पदसमष्ट्यन्तम्। तथा च सर्वं पदं स्वतन्त्ररूपेण धर्मं प्रतिपादयति एकः पदविशेषो वेति संशयः। पूर्वपक्षिभिरुच्यते यद् एकं पदमेवापूर्वं प्रतिपादयति, अपूर्वस्य फलत्वे तु फलेन सह यदा सर्वेषां पदानां सम्बन्धो वर्तते तदा पदसमष्टिरेव अपूर्वप्रतिपादिका।

अस्मिन् संशये सिद्धान्तिनः कथयन्ति यत् अपूर्वं प्रत्यक्षसिद्धः पदार्थो नास्ति, अपि तु अर्थापत्तिप्रमाणकल्पनीयं कल्पनीयवस्तु स्थले च फलाधिक्याभावे लाघवकल्पनैव तत्रावलम्बनीया, विधिवाक्यस्थप्रत्येकं पदं यदि अपूर्वस्य प्रतिपादकं स्यात्तदा अनेकेन पदेनानेकस्यादृष्टस्य कल्पना करणीया, अनेकापूर्वकल्पनायाञ्च कस्याप्यधिकस्य प्रयोजनस्य सिद्धिः न सम्भाव्यते, अतोऽनेकस्य पदस्यादृष्टप्रतिपादकत्वे कल्पनागौरवन्दोषः स्यात्, अतः एकस्यैव पदस्यापूर्वप्रतिपादकत्वमर्थात् अपूर्वफलेन साक्षात्सम्बन्धः, अन्यानि च पदानि तदपूर्वेण सह साक्षाद्भावेनान्वयी, एकस्यैव पदस्य सर्वाणि अङ्गभूतानि। एकस्य पदस्यापूर्वप्रतिपादकत्वे तु विनिगमनाविरहदोषः प्रसज्यते इत्यपि न सुसङ्गतम्। यतः, कल्पनालाघवमेव विनिगमकम्, तथा विधिवाक्यमेकं पदमेवापूर्वप्रतिपादकम्। यागादिकमपूर्वद्वारैव फलजनकं भवतीति यागादिधर्मस्य फलसाधनतासिद्धयर्थमपूर्वं विचारपदवीमधिरोहति। यागादेः धर्मस्यापूर्वद्वारा फलसाधनतासिद्धौ धर्मस्य स्वरूपभेदविचारस्य साफल्यम्। अत एव नु श्रीमन्माधवाचार्यः न्यायमालायां प्रतिपादयति 'अपूर्वस्यैव धर्मत्वात्।' धर्मस्य विचारे अपूर्वस्यापि धर्मत्वस्वीकारात् अपूर्वविचार आवश्यकः। विधिवाक्यस्थैकस्यैव पदस्यापूर्वप्रतिपादकत्वे विधिवाक्यस्थेन द्रव्यवाचकेन, गुणवाचकेन, कर्मवाचकेन शब्देनैवापूर्वं प्रतीयतेऽथ वा भावनाप्रतिपादकशब्देन अपूर्वस्य बोधो जायते। यथा 'सोमेन यजेत', 'हिरण्यमात्रेयाम् ददाति, इत्यादिस्थले हिरण्यम्, सोमश्च द्रव्यवाचके 'तस्मात् सुवर्णं हिरण्यं धार्यम्' अत्र सुवर्णशब्दः गुणवाचकः 'श्येनेनाभिचरन् यजेत', 'चित्रया यजेत', 'चित्रया यजेत' इत्यादिषु श्येनचित्रादिशब्दः कर्मवाचकः। पूर्वपक्षिदृष्ट्या द्रव्यादिवाचकशब्देनैवापूर्वप्रतीतिरुचिता, यतः, अपूर्वं फलं साध्यं वा, सिद्धपदार्थेनैव साध्यं साधितं भवतीति सिद्धपदार्थस्यैव करणता सम्भवतीति द्रव्यादिवाचकशब्द एवापूर्वप्रतिपादकः। पक्षान्तरे च 'यजति', 'ददाति' इत्यादयः शब्दाः क्रियावाचकाः, क्रियायाः साध्यत्वात् स्वयं सिद्धत्वं नास्ति तस्याः, क्रियायाः सिद्धत्वाभावादेव अपरस्य साधनत्वं तत्र न सम्भाव्यते, यतः, स्वरूपसिद्धिरेव पराधीना यस्याः, सा कदापि अपरस्य साधनं न भवितुमर्हति, अतः द्रव्यादिरेवापूर्वस्य साधनं भवतिमर्हति इति द्रव्यादिवाचकशब्देनैवापूर्वं प्रतीयते। अस्मिन् प्रसङ्गे जैमिनिः कथयति 'भावार्थाः कर्मशब्देभ्यः क्रिया प्रतीयते' २।१।१। कर्मप्रतिपादकशब्दः भावार्थं भावनामेव प्रतिपादयति, तेनैवापूर्वं प्रतीयते। श्येनादयः शब्दाः कर्मप्रतिपादकाः ते च न भावार्थाः, सन्तोऽपि न ते कर्मशब्दाः। अत एवास्मिन् सूत्रे कर्मवाचकशब्दस्य निर्देशः क्रियते, यजत्यादयः शब्दा एव भावार्थकर्मशब्दाः, यतः इमे

शब्दा भावनां कर्म चाभिदधाति । 'यजेत' इति कथने तु यागेन फलोत्पादना भवेत् इति प्रतीयते । 'यजेत' इत्यत्रांशद्वयम् लिङ्त्वम्, आख्यातत्वञ्च । इत प्रत्ययः लिङ्लकारस्य विभक्तिरिति मध्ये लिङ् वर्तते । सर्वेषां लकाराणां क्रियावाचकत्वात् लिङ्लकारस्यापि क्रिया येन मत्प्रवृत्तिरुत्पद्येत । किन्तु वैदिकविधिस्थले एवं वक्तुं न शक्यते, वेदस्यापौरुषेयत्वात् वेदविधिस्थले शब्दे एव कश्चिद्व्यापारः स्वीकरणीयः, लौकिक-नियोगस्थले 'किम्' इति कथनेन कार्ये प्रवृत्तिर्भवति, तथा चात्र शब्दमाहात्म्येनैव पुरुषस्य प्रवृत्तिर्भवतीति शाब्दी भावना उच्यते । इयमपि भावना यागादि-क्रियायां पुरुषस्य प्रवृत्तिमुत्पादयति, तथा चार्थभावनास्थले यथा कर्तुः व्यापारः भावना एवमेव शब्दव्यापारः शब्द भावनेति । अर्थभावनास्थले स्वर्गरूपं फलमुत्पद्यमानम् कर्ता च तस्य प्रयोजकः, शब्दभावनास्थले च शब्दस्य व्यापारः पुरुषप्रवृत्तेरुत्पत्तिसाधनमिति शब्दः तत्प्रयोजक इति शब्दभावनापि प्रयोजकव्यापारः ।

शब्दभावनायाः अर्थभावनायाश्च 'भाव्यम्' 'करणम्' 'इतिकर्तव्यता' चेति अंशत्रयम् । यथा 'पचेत्' इत्युक्ते कस्य पाकं कुर्यात्, केन पाकं कुर्यात्, कथं पाकं कुर्यात्, अर्थात् किम्, केन, कथम्, इति त्रिविधा आकाङ्क्षा जागर्ति, यथाक्रमे तस्य समाधानमपि—'अन्नं पचेत्' 'अग्निना पचेत्', 'अग्निं प्रज्वालयेत्' 'अग्नौ पाकपात्रं स्थापयेत्', 'जलं संजोजयेत्', 'दर्व्या संघट्टयेत्' एतद् इतिकर्तव्यतया पचेत्, तथैवेहापि भावयेत् = उत्पादयेत् इति कथनानन्तरं किमुत्पादयेत्, केन उत्पादयेत्, कथमुत्पादयेत् इति त्रिविधा जिज्ञासा भवति, एतस्यैव भाव्यम्, करणम्, इतिकर्तव्यता चोच्यते, तत्र समग्रार्थभावना शब्दभावनाभाव्या अर्थात् उत्पाद्या जायते, यतः शब्दभावनया अर्थ-भावना = यागादौ प्रवृत्तिरुत्पादिता भवति, लिङादिज्ञानं तस्य कारणम्, यतः लिङादिज्ञानेनैव पुरुषस्य प्रवृत्तिर्भवति, अर्थवादज्ञाप्या प्रशस्तैव तस्य इतिकर्तव्यता । एवमेव आर्थीभावनास्थले स्वर्गादिकं फलम् भाव्यम्, साध्यम् वा, यागादिक्रिया तस्य करणम्, प्रयाजानुयाजादिकं तस्य इतिकर्तव्यतारूपम् तथा चार्थवानकाग्यातेनापूर्वस्य प्रतीतिर्भवति धात्वर्थश्च तत्करणम् । 'यजेत्' इत्यत्र 'यज्' धातुः, 'इत्' प्रत्ययः उभयोर्मेलनेन एकं पदं भवति । इत्प्रत्ययस्याख्यातांशेन या भावना अभिधीयते तस्याः यज् धात्वर्थे याग एवान्वयः तत्प्रत्यासन्नत्वात्, अतः तं प्रत्येव तदाकांक्षते । प्रत्यासन्नोऽप्यसौ यदि प्रयोजनसाधनाक्षमो भवेत्तदा तं परित्यज्य अन्यं प्रति आकांक्षा स्यान्नाम । किन्तु धात्वर्थयागः स्वर्गादिफलसाधानयोग्य इति आख्यातवाच्यभावनया एकपदोपात्तया एव अर्थात् यज् धातुः इत् प्रत्ययश्चोभयं मिलित्वा एकं पदं भवति यज् धातोः इत्प्रत्ययस्य चैकपदोपात्तत्वम् । क्रियात्मकत्वेन यागस्य साध्यत्वात् करणायोग्यत्वमिति कारणे द्रव्यस्यैव कारणत्वप्रतिपादनमुचितम्, तथापि द्रव्यादिक्रियाश्रयणं विना करणं न भवितु मर्हतीति क्रियापेक्षितैव, द्रव्यादिना यागक्रियैवोपकृता भवति अर्थात् यागक्रियैव निष्पद्यते इति प्रत्यक्षदृष्टम् । तथा च द्रव्यादिनापूर्वोत्पत्तिर्न सम्भाव्यते, यागस्य

साध्यस्वरूपत्वेऽपि द्रव्यादिना निष्पादित्वात् फलसाधनता तस्य सम्भवति न समानपदोपात्तो धात्वर्थो यागो यदि भावनायाः कारणं भवेच्चेत् तदा पदान्तरबोधितद्रव्यादिकं प्रति भावनायाः कारणपेक्षा न भवितुमर्हति, यतः यागस्यान्तरङ्गत्वमिति तस्यैव प्रथममपेक्षितत्वम्, इति कारणे धात्वर्थ एवार्थभावनायाः करणम्, अत एव माधवाचार्यः कथयतिः—

'धात्वर्थः करणं तस्यां समानपदवर्णितः'

'चित्रया यजेत', 'दर्शपूर्णमासाभ्यां यजेत' इत्यादिषु तृतीया-श्रुत्या प्रकृत्यर्थधात्वर्थो यागादेरेव कारणत्वं प्रतीयते। तथा च आख्यातप्रत्ययुक्त-भावनावाचककर्मशब्देनैवापूर्वस्य प्रतीतिः स्यात्, स एव च विधेर्विषयोऽर्थात् फलसाधनरूपेण वेदविधिना विहितो भवेत्। अत एव सूत्रकारेऽभिधत्ते 'एष ह्यर्थो विधीयते'। अपि च 'यजेत' इति भावार्थ-कर्मवाचक-पदं साकाङ्क्षम्, अतः, 'यजेत' इति कथनेन किम्, केन, कथम् इति त्रिविधा आकांक्षा भवति तत्र च भाव्यस्य (साध्यस्य) करणस्य, इति कर्तव्यतायाश्च पूर्त्यर्थं प्रकरणपठितस्य सकलशब्दसन्दर्भस्य भावनया फलेनापूर्वेण सह अन्वयो जायते, किन्तु द्रव्यादिशब्देनापूर्वप्रतीतिस्वीकारे प्रकरणपठित-सकल-शब्दसन्दर्भस्यापूर्वेण सहान्वयो न संघटते, यतः, द्रव्यगुणादेः सिद्धशब्दत्वेन तच्छ्रवणे किम्, केन, कथमित्येतादृशी आकाङ्क्षा नोदेति। अतः, भावार्थकर्मशब्देनैवापूर्वस्य प्रतीतिर्भवति। सोऽपि अपूर्वस्य वाचको नास्ति, अपि तु बोधको ज्ञापको वा, अतः अपूर्वस्यार्थापत्तिप्रमाणसिद्धत्वमेव न तु शब्दवाच्यत्वमपि। पूर्वपक्षिमताङ्गीकारे यज्ञीयद्रव्यादेरपचारे = नाशे न प्रतिनिधित्वं भवितुमर्हति, किन्तु सिद्धान्तिनो मतानुसरणे प्रतिनिधिद्वारकमपि कार्यं निर्वहति।

भावार्थककर्मशब्देनैवापूर्वस्य प्रतीतिर्भवतीति सिद्धान्तस्वीकारे भावनान्वितधात्वर्थेन यथाऽपूर्वस्य प्रतीतिर्भवति तथैव 'स्वर्गकामः दर्शपूर्णमासाभ्यां यजेत' इत्यादिवाक्ये 'स्वर्गकामः' 'दर्शपूर्णमासः' इत्यादिपदैरपि अपूर्वस्य प्रतीतिः स्यात्, यतः, धात्वर्थस्येव पदानामपि भावनया सहान्वयो भवति, भावनया सह अन्वये धात्वर्थस्येव अन्यपदैरपि अपूर्वस्य प्रतिपादनं भवेत्। सर्वस्य भावनया सहान्वयेनापूर्वप्रतिपादकत्वे विनिगमनाविरहो भवेदिति भावनासम्बन्धयुक्तो धातुरेवापूर्वस्य प्रतिपादकः, न तु द्रव्यादिशब्दोऽपूर्वस्य प्रतिपादक इति कथनमसङ्गतम्।

नामपदस्य सिद्धरूपत्वात् तेषामुत्पत्तौ क्रियाया अपेक्षा न वर्तते, तथा च क्रियापदेन नामपदस्य कोऽप्युपकारः न सिद्ध्यतीति नामपदस्य क्रियापदेन सहान्वयपूर्वकमदृष्टप्रतिपादकता भवेदेव, तथा च यावन्ति नामपदानि तावतामदृष्टानां कल्पना स्यात्, सर्वेषां तुल्यबलत्वात् एकेनादृष्टस्योत्पत्तिर्नापरेणेति कथनं युक्तिविरुद्धमेव। अनेकविधादृष्टकल्पनेऽपि फलाधिक्यं न जायते, तथा नामपदस्यापि अपूर्वप्रतिपादकत्वम् इति

कल्पनायामापाततोऽनेकादृष्टकल्पना स्वीकरणीया। तथा चानेकादृष्टकल्पनास्वीकार-पक्षस्यासमीनत्वमेवेत्युक्तं तन्त्रवार्तिके—

'बह्वदृष्टप्रसंगाद्धि धर्मो नेष्टः पदे पदे'। त० वा० पृ० ३२९।

क्रियापदस्यापूर्वप्रतिपादकत्वे कल्पनालाघवं भवति। यतः, क्रिया साध्यरूपा, द्रव्येण च क्रियैव साध्यते इति न कल्पनामात्रमपि तु प्रत्यक्षसिद्धम्, उक्तं माधवाचार्यैः—

'द्रव्याद्युपकृतिर्दृष्टा धात्वर्थोत्पादनात्मिका'

धात्वर्थयागादिक्रियोत्पादनेनैव द्रव्यादेरुपकारो भवति इति प्रत्यक्षसिद्धमेव। अतो नामपदेनापूर्वप्रतीतिः न स्वीक्रियते। अवशिष्टस्याख्यातस्यैवापूर्वप्रतिपादकत्वम्। तथा च नास्ति विनिगमनाविरहप्रसङ्गोऽपि। यतः, विवादास्पदीभूतैकाधिकपक्षप्रसङ्गे यद्येकतरपक्षपातिनी युक्तिर्न भवेत्तदैव विनिगमनाविरहो जायते। यदैकाधिकस्य पक्षस्य प्रसक्तिर्नास्ति तदा का कथा विनिगमनाविरहस्य। विवादास्पदीभूतस्यैकाधिकपक्षस्य सत्त्वेपि धात्वर्थस्य भावनाकरणत्वप्रतिपादने बलवत्तरैकश्रुतिप्राधान्यं संरक्षितमेव, पक्षान्तरे द्रव्यादेर्भावनाकरणत्वप्रतिपादने वाक्यार्थस्य विधायकत्वमेव स्वीकृतं भवति। किन्तु वाक्यापेक्षया श्रुतेः प्राबल्यमिति एकपदश्रुतिलभ्यस्य धात्वर्थस्य भावनाकरणत्वमस्त्येवेति माधवाचार्यः कथयति—'धात्वर्थः करणं तस्यां समानपदवर्णितः' अतः कल्पनालाघवरूपयुक्तिबलात् एकपदश्रुतिरेव विनिगमिकेति।

अत्रेयमाशङ्का यत् प्रमाणसिद्धः अपूर्वनामकः पदार्थो यदि भवेत्तदा कल्पनागौरव-भियाऽपूर्वस्य भावार्थकर्मशब्देनैव प्रतीतिरिति वक्तुं शक्यते। एतस्य समाधानार्थ-मेवाचार्यः कथयतिः—'दर्शपूर्णमासाभ्यामिति तृतीयया दर्शपूर्णमासयागस्य स्वर्ग-साधनत्वं प्रतीयते, इयं करणे तृतीया, साधकतममेव करणमर्थात् क्रियानिष्पत्तौ प्रधानं साधनम्। यागश्च क्रियाविशेषः, क्रिया च क्षणिका, उत्पत्तिपरक्षणे एव विनश्यति, यागक्रियाफलं स्वर्गश्च, क्रियया इहैव नोत्पद्यते। स्वर्गो हि देहान्ते प्राप्यते, तथा च यागेन कथं स्वर्गप्राप्तिः सम्भाव्यते, फलोत्पादकस्य साधनस्य फलाव्यवहितपूर्वस्थितिः आवश्यिकी, श्रुतिप्रतिपादितस्य यागादेः स्वर्गादिफलसाधनत्वस्य च अस्वीकारो न भवितुमर्हति, यतः, तथा सति श्रुतेरप्रामाण्यं स्यात्, तस्मात्क्षणिकयागादिकर्मणः फलोत्पत्त्युपपत्त्यर्थं कापि कल्पनाऽङ्गीकरणीयैव, तद्वशादेवापूर्वस्य सिद्धिर्भवति। श्रुतार्थापत्तिरेवापूर्वास्तित्वे प्रमाणम्, तथा चार्थापत्तिप्रमाणायत्तैवापूर्वपदार्थसिद्धिः। अपूर्वः न कश्चिदपूर्वः पदार्थोऽपि तु प्रधानकर्मणोऽङ्गकर्मणश्चानुष्ठानात् पूर्वं अनुष्ठाता पुरुषः स्वर्गप्राप्तेरयोग्यस्तिष्ठति, क्रत्वादिकमपि स्वर्गरूपकार्योत्पादनायोग्य एव, अनुष्ठिते च प्रधानकर्मणि अङ्गकर्मणि अनुष्ठातृपुरुषगता अनुष्ठेयकर्मगता चायोग्यता दूरीकृता भवति योग्यता चापादिता भवति—इतिस्वीकर्तव्यमेव यतः, तथाऽस्वीकारे वेदविधिरेव व्यर्थः स्यात्। योग्यतोपादनं विना अयोग्यः पुरुषोऽयोग्यं च कर्मोभयमपि व्यर्थमेव,

अत एव तु जैमिनिः प्रतिपादमति—'चोदना पुनरारम्भः' (२।१।५) पूर्वोक्तोभयगता योग्यतैवापूर्वशब्देनोच्यते। कुमारिलेनोक्तमेव—

कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा।
योग्यता शास्त्रगम्या या परा साऽपूर्वमिष्यते ॥ त० वा० पृ० ३४५।

अर्थात् अनुष्ठानात्पूर्वं फललाभायोग्यः अनुष्ठेयं च कर्मफलदानायोग्यम्, अनन्तरं योग्यताधानमेवापूर्वम् योग्यता च शास्त्रगम्या, यदि अपूर्वस्य साक्षात्फलसाधनत्वं स्वीक्रियते तदा यागस्य फलसाधनत्वं नायाति, तथा चापूर्वं यागादेः व्यापारविशेष एव, तस्य व्यापारः तादृशस्य व्यापारिणः व्यवधायकं करणं न भवितुमर्हति, यतः, करणं सर्वत्र व्यापारविशिष्टमेव भवति, करणस्य क्रियाविशेष एव व्यापारः करणस्य नाशे च निराश्रितो व्यापारो न स्थातुमर्हति, तथा चापूर्वस्य स्वर्गादिफलसाधनभूतस्य यागादेर्व्यापारत्वं नास्ति अपि तु शक्तिविशेषरूपत्वमेव। शक्तिरियमर्थापत्तिप्रमाण-कल्प्येति अपूर्वमर्थापत्तिप्रमाणसिद्धम्, यथा अग्नेर्निर्वापनानन्तरमपि अग्निनोत्तापिते जले दाहिका शक्तिस्तिष्ठति बहुक्षणव्यापिनी, तथैव यागादिक्रियाया विनाशानन्तरमपि अपूर्वं यागादिजन्यं शक्तिरूपं यागकर्तुरात्मनि फलाव्यवहितपूर्वक्षणं यावत् अवतिष्ठते। अतो नाप्रामाणिकोऽपूर्वपदार्थः।

इदञ्चापूर्वम् अङ्गापूर्वम्, उत्पत्त्यपूर्वम्, समुदायापूर्वम्, परमापूर्वं फलापूर्वम्वेत्यादि-भेदेन बहुविधम्। दर्शपूर्णमासममावस्यायां पूर्णिमायाम्वाऽनुष्ठीयतेऽमायामनुष्ठितस्य भागत्रयम् पूर्णिमायाममुष्ठितस्यापि भागत्रयम्, एतेषां भागानामपि बहुभिः अङ्गकर्मभि-र्निष्पत्तिर्भवति, सर्वा अपि क्रियाः परक्षणे एव विनश्यन्ति, अतः सर्वाभिरङ्गक्रिया-भिरेकमेकमपूर्वमुत्पद्यते, अङ्गक्रियाजन्यञ्चापूर्वमङ्गापूर्वम् तथा च षडपूर्वाणि उत्पद्यन्ते, एतत्सर्वमुत्पत्त्यपूर्वम्, दर्शस्य त्रिभिर्यागैः यत्त्रीणि अपूर्वाणि उत्पद्यन्ते ततोऽपि एकम-पूर्वमुत्पद्यते एवमेव पूर्णमासयागादपि एकमपरमपूर्वमुत्पद्यते। तदपूर्वमेव समुदायापूर्वम्। एतदतिरिक्तमेकमपूर्वं परमापूर्वं फलापूर्वं वा कल्प्यते, एतदेवापूर्वं फलोत्पत्तिपूर्वक्षण-पर्यन्तं तिष्ठति फलोत्पत्तौ विनश्यति, फलापूर्वं परमापूर्वं विना वा यागस्य फल-जनकत्वं न सिद्ध्यति, अतः परमापूर्वं कल्पनीयम्, अवान्तरापूर्वं विना परमापूर्वं नोपपद्यते इति तदपि कल्पनीयमेव। तथा च परमापूर्वस्य, समुदायापूर्वस्य उत्पत्त्य-पूर्वस्याङ्गापूर्वस्य च पूर्वपूर्वापूर्वोपपादनार्थं परपरापूर्वमवश्यमङ्गीकरणीयम्। उक्तं भट्टमहाशयेनः—

प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि।
अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः ॥ त० वा० पृ० ३५१।

आचार्योदयनेनापि अपूर्वस्यावश्यकत्वमङ्गीकृत्यैवमुक्तमिदानीं न्यायमतेनोच्यते :—

पूर्वोक्तयुक्त्या यज्ञादिकर्मणः फलं स्वर्गादिरिति स्वीकारेऽपि यज्ञादिकर्मजन्या-लौकिकस्यादृष्टस्य धर्माधर्मयोर्वा स्वीकारस्य प्रयोजनं नास्ति।

चिरध्वस्तं फलायालं न कर्म्मातिशयं विना।
सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥ (न्या० कु० ९)

चिरध्वस्तं कर्म, अतिशयं शक्तिविशेषं विना वा फलोत्पादने समर्थो न भवति, (अर्थात् बहुपूर्वं ध्वस्तं कर्म कामपि शक्तिं कमपि व्यापारम्वाऽनुत्पाद्य कालान्तरभावि-फलोत्पादने समर्थो न भवति। संस्कृतभूतेन भोग्यवस्तुना वा निर्विशेषात्मसकलस्य संभोगो निष्पन्नं भवितुं, नार्हति, चिरविध्वस्तकर्मजन्यव्यापार, यदि भोग्यान्नपानादौ स्यात् तदा एतद्व्यापारयुक्तभोग्यसकलवस्तुना अदृष्टशून्यात्मना एकस्मिन्नेव वस्तुनि नानाविधभोगस्य उपपत्तिर्न भवेत्।

"स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिवेदविधिना यज्ञादिकर्मसमूहः इष्टस्य स्वर्गस्य हेतुरेवं कर्तव्यकार्यमित्यवगतो भवति। यतः यजेत इत्यत्र लिङ् विधिबोधकः अनेन यागेन इष्टहेतुना कर्तव्यत्वम् एवं गुरुतरदुःखाजनकत्वमिति सिध्यति, इति एत-त्कर्मणः फलमशुभं भवितुं नार्हति। अतः—यद्धि अशुभफलजनकन्तत्र एतादृशी यथार्थबुद्धिर्न भवेत्। वेदः—आप्तवाक्यम्, तेन यथार्थबुद्धिरेव भवति। कर्ममात्रम-त्यल्पकालस्थायि इति चिरकालं न तिष्ठति। आशुविनाशियज्ञादिकर्मणा परकालवर्ति-स्वर्गादिफलोत्पत्तिकालपर्यन्तस्थाप्यदृष्टकारणं कर्म कर्तुः धर्मविशेषः स्वीकरणीय एवान्यथा एतत्कालानुष्ठितं कर्म स्वर्गादिफलाव्यवहितपूर्वं नास्तीति परकाले स्वर्गादिफलस्य जनकः न भवेत्। अदृष्टकारणस्वीकारे एतत्कालेऽनुष्ठितकर्मसमूहोप्येतदवृष्टेन परोक्षभावेन मध्यवर्तिव्यापारमदृष्टम्वा उत्पाद्य तेन परम्परया परकालीनस्वर्गादिफलस्य कारणं भवति। अत्रायं संशयो भवितुमर्हति एतददृष्टादिकं कुत्र जायते ? यज्ञादिकर्मजनिता-दृष्टं कर्मकर्तुः जीवस्य, न भोग्यवस्तुनः इतः पूर्वमेतस्योत्तरमेकदा प्रदत्तं पुनरपि इदानी-मुच्यते। अदृष्टं कर्मकर्तुः जीवस्य, न भोग्यवस्तुनः। वसन्तपूर्णिमायाः पूर्णचन्द्रदर्शने भावुकभक्तस्य भगवद्विभूतिं मनसि कृत्य भगवत्प्रेम्णि तन्मयता भवति, दुर्जयकामनाया अतृप्तिवशतः विरहिणः मर्मव्यथा भवति, चक्रवाकयुगलं विरहदुःखं विस्मृत्य चन्द्रिका-पाने तत्परं भवति[1]। एतत्कारणानुसन्धाने तु यस्य यादृशप्राक्तनकर्मजनितादृष्टम्, तस्य एकेनैव वस्तुना तदनुसारि-फलभोगो भवति। तस्मात् कर्मजनितादृष्टं जीवस्यैव न तु भोग्यवस्तुन इति।

यथा वह्नौ दाहजनिका शक्तिः स्वीक्रियते तथैव कर्मजनितादृष्टं भोग्यवस्तुनि इति स्वीकारेऽपि क्षतिर्नास्ति। आकाशसंयोगे इन्धनसंयोगे च उभयत्र संयोगत्वधर्मस्य समानत्वेऽपि यथा वह्नौ इन्धनसंयोगे सत्येव अग्निरुत्पद्यते, आकाशसंयोगे च नोत्पद्यते, तथैव भोग्यवस्तुनः समानत्वेऽपि नानाविधजीवस्य कर्मजनितनानाविधादृष्टयुक्तभोग्यवस्तुनः जीवानामनुष्ठितकर्मजनितनानादृष्टप्रभावेण जीवस्य नानाविधभोगशक्तिः सम्पाद्यते।

---

१. रात्रौ चक्रवाकः चक्रवाकी च पृथगेव तिष्ठत इति प्रसिद्धिः।

भोग्ये वस्तुनि यस्य कर्मजनिता यादृशी शक्तिः अदृष्टम्वा जायते, भोग्यवस्तु स्वीयैतादृश-शक्तिवशेन शक्त्यनुसारं तज्जीवस्य भोगं सम्पादयति । अतः शक्तिरदृष्टम्वा भोग्यवस्तुनि स्वीकारेऽपि एकेनैव वस्तुना नानाजीवस्य अनेकविधभोगस्यानुपपत्तिर्नास्ति । भोग्य-वस्तुनि शक्तिस्वीकारपक्षेऽन्या अपि युक्तयः सन्ति । तथा हि—तृणादिदाह्यवस्तुनि अग्निसंयोगे भस्म भवति, अतः दाहानुकूला शक्तिः वह्नावेव स्वीक्रियते । अन्यथा शक्तिहीनवह्निना दाहस्वीकारे प्रतिबन्धककर्मणः सद्भावेऽपि दाहं प्रसज्येत । यद्युच्यते मणिसद्भावस्थले मणिसद्भाववशात् दाहो न जायते, मणिरेव दाहस्य प्रतिबन्धकः, इति मणौ दाहानुकूलशक्तिस्वीकारो नावश्यकः, तथा च मणेरभावः दाहं प्रति कारणमित्येव फलितं भवति, यतः प्रतिबन्धकाभावः भवति कारणम्, यः पदार्थः यस्य प्रतिबन्धकः यस्य वस्तुनः सद्भावे कार्यं न जायते तस्य अभावः तत्कार्यं प्रति कारणम्, किन्तु अभावः कारणम्भवितुं नार्हति, यतः, किमपि वस्तु कस्यापि कार्यस्य कारणं भवति तदा तस्य कारणरूपेणाभिमतस्य वस्तुनः क्रियासम्बन्धो नितान्तमपेक्षितो भवति । कुम्भकारः दण्डेन चक्रभ्रमणं न कुर्यात् तदा सत्यपि दण्डादिकारणसमवधाने तद्वस्तुसकलं घटस्य कारणमुत्पादकम्वा न भवति, अतः साक्षात् परम्परया वा क्रियया सह सम्बन्धप्रयुक्तमेव दण्डादिकं घटस्य कारणम्भवति । अभावश्च निषेधमात्रम्, तत्र विधिरूपता नास्तीति अकिञ्चित्करोऽसौ पदार्थः । अभावे साक्षात्परम्परया वा क्रियासम्बन्धो भवितुं नार्हति, अतः अभावः कस्यापि कारणमपि भवितुं न शक्नोति इति मणिः वस्तुतः दाहस्य प्रतिबन्धको नास्ति । तथा सति मणिः वह्नौ या दाहानुकूला शक्तिस्तां नाशयति अत एव च मणौ दाहप्रतिबन्धकत्वम्, मणौ प्रतिबन्धकशब्दः गौणतयैव प्रयुज्यते, मणिः प्रतिबन्धकशब्दस्य मुख्यार्थो भवितुं नार्हति । फलतः—वह्नौ दाहानुकूला शक्तिरवश्यमेव स्वीकरणीया । वस्तुनि शक्तिर्नास्तीति कथनं साहसमात्रमेव ।

"यजेत स्वर्गकाम" इत्यादौ यागस्वर्गयोः समभिव्याहारात्साध्यसाधनभावः प्रतीयते, परन्तु कालान्तरभाविस्वर्गोत्पादसमये आशुतरविनाशिनो यागस्य साक्षात्त-त्साधनत्वासंभवेन तत्र साधनत्वोपपत्तये अपूर्वं द्वारभूतं कल्पते । चिरध्वस्तं यागादि अतिशयपूर्वं विना स्वर्गादिफलसाधनं नेत्यर्थः । तथा च यागजन्यव्यापारस्य फलपर्यन्त-स्थायित्वस्वीकारेण तद्द्वारा यागादेः तत्साधनत्वोपपत्तिः । न चापूर्वेणैव फलोपपत्तौ यागादेरन्यथासिद्धत्वमिति वाच्यम्, व्यापारेण व्यापारिणोऽन्यथासिद्धत्वाभावात् । अदृष्टसिद्धावपि तस्य भूतधर्मत्वमेव स्वीक्रियते, नात्मधर्मत्वमिति । समीचीनो नियतो भोगः तत्तददृष्टशून्यस्यात्मनो न संभवति, भूतानां सर्वसाधारण्यात् सर्वस्य समानभोगा-पत्तेः । स्वकारणप्रभावोत्पन्नासाधारणस्वरूपविशेषवच्छरीरेन्द्रियादिनियतभोगसाधन-मस्ति । शरीरादीनां नियतफलभोगानुकूलस्वरूपं यदिष्यते तत्किं तेषामतीन्द्रियं स्वरूपं सहकारिविशेषो वेति निराकरणसौकर्याय विकल्पयति—आद्ये ऐन्द्रियकस्वरूपस्याती-न्द्रियत्वाभिधाने व्याघातः स्यात्, न हि ऐन्द्रियकस्वरूपोऽतीन्द्रियस्वरूपोऽभिधातुं शक्यते । द्वितीये अतीन्द्रियसहकारि अपूर्वमिति—

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥ (न्या० कु०-११)

प्रोक्षणाभ्युक्षणादिना संस्कारः (शक्तिविशेषः) पुरुषस्येष्टः, परमाणुसकलस्य स्वकीयपाकजविशेषगुणसकलमेव (परमाणोः पाकजरूपरसादयः) विशेषाधायकं भवति । अयमाशयः—पाकजविशिष्टविशिष्टरूपरसविशिष्टविशिष्टभावापन्नपरमाणुसकलात् विशेषकार्यं जायते ।

पूर्वपक्षतया विचारकवचनस्य रमणीयत्वेऽपि व्रीह्यादौ शक्तिस्वीकारे कल्पनागौरवम्भवति । यतः—प्रोक्षणादिजनितशक्तिः यदि व्रीह्यादौ स्वीक्रियते तदा तत्र संख्यानुयायिशक्तिः अर्थात् व्रीहिसंख्यकाः शक्तयः स्वीकर्तव्या भवेयुः । यदेयं शक्तिः कर्त्तरि स्वीक्रियते यदा व्रीहिसंख्यानुयायिनी न भवेदपि तु कर्तृसंख्यानुयायिनी भवेदिति अल्पसंख्यकशक्तिस्वीकारेणापि कार्यं प्रचलेत् । अतः इयं शक्तिः कर्मफलभोक्तरि पुरुषे एव स्वीकरणीया, तथा सति प्रोक्षणमेतच्छक्तिद्वारा परम्परया बहुकालपरवर्तिनोऽपवातस्य निमित्तम्भवेदित्यत्र किमपि बाधकं नास्ति । किञ्च—क्षेत्रस्थधान्यादीनां विनाशस्वीकारेऽपि सकलभोक्तृजीवस्य अदृष्टबलेनैव धान्यपरमाणुना धान्याङ्कुरोत्पत्तिः स्वीक्रियते एवं प्रलयानन्तरं पुनः सृष्ट्यादौ भगवान् भोगार्थं भोगान्ते च मोक्षार्थं जीवस्यादृष्टानुसारमेव सृष्टिं करोति । महाप्रलयेऽपि जीवस्यादृष्टं सर्वथा विनष्टं न भवति, तथा सति पुनः सृष्टेः प्रयोजनमेव नास्ति । भगवान् जीवस्य कर्मानुसारिणः भोगस्य मोक्षस्य च कृते एव विश्वप्रपञ्चं सृजति । श्रवणमननादिरूपभगवदाराधनाबलेन भोगावसाने जीवस्य कर्मजनितसंस्कारस्य समूलक्षये जीवः कृतकृत्यो भवति, जन्मजरामरणादिसंघातेभ्यः परित्राणं प्राप्नोति । एवं माघकर्षितायां भूमौ विशेषशक्तिस्वीकारस्यापि प्रयोजनं नास्ति, यतः, दृष्टहेतुनैव कार्योत्पत्तिसम्भवे अदृष्टहेतुकल्पनाया अनुचितत्वात्, माघमासकर्षितभूमौ माघस्य सूर्यतापः एवं शिशिरसंयोगो भवतीति भूमौ दृष्टविशेषरूपरसादिसञ्चारो भवति, दृष्टरूपरसादिसंचारेणैव क्षेत्रे उत्तमशस्यस्योत्पत्तिर्जायते, इति भूमौ शक्तिविशेषस्वीकारोऽनावश्यकः ।

उक्तरीत्या प्रतिबन्धकाभावस्य कारणत्वस्वीकारेणैव प्रतिबन्धकस्थले कार्यापत्तिवारणसंभवात्तदर्थं कारणे स्वाभाविककार्यानुकूला शक्तिर्मास्तु, आधेयशक्तिस्वीकारस्त्वावश्यक एवेतिमन्तव्यम् । व्रीहीन्प्रोक्षतीत्यादिवाक्यविहितप्रोक्षणादेः संस्कारानाधायकत्वे, व्रीहीनवहन्तीत्यादिवाक्यविहितवेलायां स्वरूपेणावर्तमानस्य प्रोक्षणस्याप्रोक्षितव्रीह्यादिव्यावर्तकत्वानुपपत्त्याऽप्रोक्षितानामपि तेषामवघातापत्तिः स्यात्प्रोक्षणविधेश्च वैयर्थ्यं स्यात् । संस्काराधायकत्वस्वीकारे तु संस्कारस्य तत्समवेतस्य कालान्तरेऽपि सत्त्वेन व्यावर्तकत्वमुपपद्यते, तत एव संस्कारविधेरपि सार्थक्यम् । यदि व्रीहीन्प्रोक्षतीति वाक्ये संस्काराश्रयणान्न तस्य विधिविषयतेति, चेन्न: व्रीहीन्प्रोक्षतीत्यत्र द्वितीयाश्रुत्या व्रीहीणां कर्मत्वं प्रतीयते । कर्मत्वं च क्रियाजन्यफलभागित्वं फलं च संस्कारः, तस्य

स्थायितया कालान्तरेऽपि सत्त्वेन व्यावर्तकत्वोपपत्तिरिति प्रोक्षितानामेव तेषामवघातादिद्वारा पुरोडाशकार्ये उपयोगः। यदि व्रीहीनवहन्तीत्यत्र व्रीहिमात्रश्रवणात्तस्यैवाघातेऽन्वयो न तु प्रोक्षितस्यैव विशेषाश्रवणादिति उच्यते। सामान्यस्यावघातासंभवेन तद्विशेषापेक्षायां प्रकरणप्राप्तस्य प्रोक्षितव्रीहेरेव तथान्वयस्यौचित्यात्, उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावात्, दृष्टार्थत्वेन प्रोक्षणस्योपपत्तावदृष्टार्थत्वकल्पनानौचित्याच्च। किञ्च तथापि "व्रीहीन्प्रोक्षति" "व्रीहीनवहन्ती"ति वाक्याभ्यां व्रीहेरेव प्रोक्षणमवहननं च विधीयताम्, किं प्रोक्षणविशिष्टे अवघातविधानेन। तथा च नावघातविषयव्यावर्त्तनाय प्रोक्षणजन्यातिशयकल्पनेति भावः। प्रोक्षितव्रीहयोऽवघाताय कल्पन्ते इति वाक्यशेषानुसारेण प्रोक्षितानामेवावघातविधानौचित्येन तदर्थं संस्कारकल्पनाया आवश्यकत्वात्। प्रोक्षणध्वंसविशिष्टेऽवघातविधानन्तु वक्तुमशक्यम् ध्वंसस्यकारणत्वापत्तेः। मन्त्रादिसहकृताः प्रोक्षणादय एवावघातनियमापूर्वप्रयोजका इत्यपि न, आशुविनाशिनां तेषां ध्वंसेनापि तत्कार्योत्पत्तिस्वीकारात्, तर्हि ध्वंसद्वारैव ते तदुत्पादका भविष्यन्तीति। ध्वंसव्यापारद्वारा यागादय एव स्वर्गादिफलजनका इत्यपि वक्तुं शक्यतया तत्राप्यपूर्वाभावापत्तेः। न च ध्वंसस्यानादिकालस्थायितया तत्फलस्य स्वर्गादेरनन्तकालस्थायित्वापत्तेः, ततोऽवरोहाभावे ये रमणीयाचरणास्ते रमणीयां योनिमुत्पद्यन्ते, ये कपूयाचरणास्ते कपूयां योनिमापद्यन्ते इत्यादिसूचितपूर्वकर्मफलभोगानुपपत्तेः मोक्षानुपपत्तेश्चेति यागादिजन्यापूर्वमवश्यमेव स्वीकार्यम्। अपूर्वस्वीकारेऽपि नेयं शङ्का समाधातुमर्हा, न हि फलमुत्पाद्यापूर्वः नश्यतीति तत्स्वभावः कल्पयितुं शक्यते, तन्नाशे तद्भोगानुपपत्तेः। नाप्यपूर्वमात्रं समानकालफलप्रदम्, साधनतारतम्येन न्यूनाधिककालस्थायिभोगजनकत्वस्वाभाव्यात्तेषां विधिवाक्यत्वात्तेषां तत्स्वभावकल्पने तत एव ध्वंसस्यापि तादृशस्वभावः कल्प्यामिति समः समाधिः। फलम्प्रदायापूर्वं नश्यति, ध्वंसस्तु अग्रे प्रवहन्नपि न फलं यच्छति।

अस्तु तर्हि प्रोक्षणादिजन्योऽतिशयः परन्त्वसौ आत्मधर्म एव न भूतधर्म इति।

अनेकसंस्कारकल्पनापेक्षया एकातिशयकल्पने लाघवमिति तर्कसहकृतधर्मिग्राहकमानादतिशयः सिध्यन्नेकपुरुषनिष्ठश्च सिध्यति। यदि व्रीहिनिष्ठः संस्कारस्स्वीक्रियते तदा सकलव्रीहिषु व्यासज्यवृत्त्या एक एव संस्कारः किम्वा यावन्तो व्रीहयस्तावन्तः संस्कारा इति अन्त्ये महागौरवप्रसङ्गात्। आद्ये एकव्रीहिनाशे तन्नाशापत्तेः यथा दशत्वादिसंख्या व्यासज्यवृत्त्यानेकत्र वर्तते तत्र एकस्याप्यपायेऽपैति एवं संस्कारोऽपि नश्येत्। न च यावदाश्रयनाशेन तन्नाशः कल्पयितुं शक्यः लाघवादाश्रयनाशत्वेनातिशयनाशं प्रति हेतुता न तु यावदाश्रयनाशत्वेन हेतुता गौरवादित्यास्ताम्।

यदि स्वीक्रियते परमाणूना स्वगुणाः पाकजादयो विशेषाः, व्रीहियवादिनिष्ठः स्वगुणः पाकजरूपरसादिरेव विशेषोऽतिशयस्वरूपः स च वीजावयवेषु परमाणुविद्यते इति तदभावादेव यवबीजाद्यवाङ्कुर इत्यादिनियम इति न तत्र संस्कारा-

भावेऽपि व्यभिचारगन्धः परमाणावतिशयाभावाच्च दृष्टान्तः साध्यविकल इत्यर्थः। यद्यपि परमाणुषु पाकजविशेष एवातिशय इति न दृष्टान्तः साध्यविकल इति तथापि शक्तिरूपातिशयो नास्तीति तत्तात्पर्य्येण तथाभिधानात्। न च शक्तिपाकज-रूपयोरतीन्द्रियत्वाविशेषात् शक्तिकल्पनं वा पाकजरूपादिकल्पनं वेत्यत्र विनिगमकत्वा-भावात् पाकजादिरेव विशेषो न शक्तिरेव कथं निर्णय इति उच्यते? तदा अवयविगत-रूपादिसजातीयरूपादेरवयवेषु स्वीकारानुरोधेनैव तन्नियतकार्योपपत्तौ तदर्थं शक्त्या-धानकल्पनायां गौरवात्। यो यदुद्देशेन विधीयते स तत्रातिशयजनक इति व्यासेः व्यभिचारः स्यात्। शुष्यच्छस्योपजीवनौपाधिकवृष्टिकामनया यत्र कारीरीयागः क्रियते तत्र देवतोद्देश्यकवैधाग्न्यधिकरणकहविस्त्यागेन यागेन पुरुष एव संस्क्रियते। न वा देवता न वाऽग्निस्तादृशादृष्टवदात्मसंयोगान्नभसि प्रादुर्भूतेभ्यो मेघेभ्यो वृष्टि-रुत्पद्यते, तथा व्रीह्युद्देशेन प्रयुक्ताः प्रोक्षणादयः पुरुषमेव संस्कुर्वन्ति तादृशसंस्कृतात्म-संबद्धा व्रीह्यादयोऽवघातादिकार्योपयोगिनो भवन्ति एतेन व्रीहौ परम्परासम्बन्धेन तादृशातिशयसम्बन्धकल्पनायां गौरवात् साक्षात् सम्बन्धकल्पनैव युक्ता प्रामाणिक-गौरवस्यादूषणत्वात्। न च पुरुषनिष्ठातिशयकल्पनायां यदा पुरुषो नाधिकृतस्तदा तत्प्रयुक्तप्रोक्षणादेः संस्कारानाधायकतया वैयर्थ्यम् व्रीह्यादिगतसंस्कारकल्पनायामपि एतद्दोषतादवस्थ्यात् अनधिकृतपुरुषकृतप्रोक्षणादेः संस्कारानाधायकत्वात् न कर्तृकर्म-साधनवैगुण्यादितिन्यायसूत्रे प्रतिपादितम्। साधनादिवैगुण्यवत्, कर्तृवैगुण्यस्यापि फलानु-त्पादकत्वमिष्टमेव, आगमप्रमाणस्योभयत्र तुल्यत्वात्। वर्हिषि इवेति वर्हिस्तृणानि वर्हिष हविरासादयेदित्यादिवाक्येन विहिते तरणासादनादौ कृतार्थानां वर्हिषां यथा कार्यान्तरेषु विनियोगो न भवति। तथा प्रोक्षणे कृतार्थानां व्रीहीणामवघातादिषु पुनर्विनियोगो न स्यात्। व्रीहिनिष्ठसंस्कारपक्षे तु संस्कृतस्य क्वचिद्विनियोगो आवश्यको-ऽन्यथासंस्कारस्य वैयर्थ्यापत्तेरिति विनियोगोऽवघाते आवश्यकः। यदि तु वर्हिरादौ विनियोगवचनान्तराभावादविनियोगः, इह तु व्रीहिभिर्यजेत इत्यादिविनियोगवचन-दर्शनात् पुनः कार्यान्तरे तत्सम्बन्धोऽभ्युपेयत इति तज्जातीयस्याप्रोक्षितव्रीह्यादेरुपादानं स्यात् व्रीहीत्वस्योभयत्राविशेषात्। विशेषस्य संस्कारस्य चेष्टस्य तत्रानङ्गीकारादिति चेदत्राहुः—संस्कारा हि विचित्रमहिमानः यथाऽभिचारादयः। यादृशशत्रुशरीरमुद्दिश्य अभिचारः क्रियते स अभिचारकर्तृपुरुषसमवेतोऽपि तादृशशरीरसहकारितया तदेकशरीरं नाशयति न शरीरान्तरम्, न वा तस्यैव शत्रोर्जन्मान्तरीयं शरीरम्, तस्यानुद्देश्यत्वेना-सहकारित्वात्। एवमभिमन्त्रणादिसंस्कारः पुरुषसमवेतोऽपि तादृशोद्देश्यव्रीह्यादिः सहकारीभूत्वा तस्यैवावघातं नियच्छति। व्रीहीनवहन्तीतिविधेः प्रोक्षितान् व्रीहीन-वहन्यादित्यत्रैव तात्पर्य्यमित्यर्थः। प्रोक्षिता व्रीहयोऽवघाताय कल्पन्ते इति वाक्यशेष-सहितव्रीहीनवहन्यादिति विधेस्तत्रैव तात्पर्यात्। अत एव संस्कारा अवघाताय नोपयुज्यन्त इति न किन्तूक्तन्यायेनावघातायोपयुज्यन्ते। पुरुषसमवेतो वा व्रीहि-

समवेतो वा संस्कारः सर्वथा कार्योपयोगी न एवेति भावः। कथं तर्हि व्रीहीणां संस्कार्य्यकर्म्मत्वं यतः क्रियाजन्यफलभागिन एव कर्मत्वम्। व्रीहीगतातिशयकल्पने तु तादृशक्रियाजन्यसंस्काराश्रयत्वेन तेषां कर्मत्वमुपपद्यते। तस्य पुरुषसमवेतत्वमिति पक्षे तु तादृशफलाश्रयत्वाभावात् कर्मत्वन्न स्यादिति उच्यते, तदा प्रोक्षणक्रियाजन्यजलसंयोगाश्रयत्वेन तेषां कर्मत्वोपपत्तेः। न च व्रीहीन् प्रोक्षतीति बहुवचनश्रुत्या सर्वेषामवघातायोपनीतानां व्रीहीणां कर्मत्वमेष्टव्यं प्रोक्षितजलसंयोगस्य सकलव्रीहीस्वभावादिति तत्त्वम्। कपिञ्जलानालमेत व्रीहित्रयगतजलसंयोगेनैव तदुपपत्तौ सकलव्रीहिगतत्वापेक्षाविरहात्। यो यदुद्देशेन क्रियते इति परोक्तानुमाने व्यभिचारं स्फुटमित्यत्र न संशयः। पुत्रेष्टि जातेष्टि "वैश्वानरं द्वादशकपालं चरुं निर्वपेत्" पुत्रे जाते। पुत्रोत्पत्त्यनन्तरमिमं यागं पिता करोति तज्जन्यं फलञ्च पुत्रे तदुद्देशेनैतद्विधानात्। अत एव यस्मिन् जाते शतामिष्टिं निर्वपति सपू त एव तेजस्वी अन्नादः पशुमान् भवतीति श्रुतिः पुत्रे एव तत्फलं बोधयति। एवममावास्यायामपराह्णे पिण्डपितृयज्ञेन यजेत इत्यादिनिकृष्यादिसाध्य भोगजनकादृष्टस्य वैयर्थ्यं स्यात्।

## अपूर्वमीमांसकः

विहितक्रियाजन्यं यावत्फलोत्पत्त्यस्थायि अपूर्वं नाम किञ्चिद्वस्तु स्वीकुर्वन्ति मीमांसका गौतमीयाः काणादाश्च। तत्र—

फलाय विहितं कर्म क्षणिकं चिरभाविने।
तत्सिद्धिर्नान्यथेत्येवमपूर्वं प्रतिगम्यते॥

तस्मादस्त्यपूर्वमिति।

प्रमाणाभावान्नापूर्वसिद्धिः तथा हि—न तावदत्र प्रत्यक्षादिकं प्रवर्तते, रूपाद्यनात्मकत्वेन चक्षुरादिभिरसम्बन्धात्। नाप्यनुमानम्, केनचिल्लिङ्गेन सहादृष्टसङ्गतित्वात्। अपि च स्वतन्त्रस्य वापूर्वस्यानुमेयत्वम्? अस्त्यपूर्वमिति, अन्यविशेषणस्य वा? न तावत् स्वतन्त्रस्य वस्तुनः साध्यमानायां भावधर्मस्य हेतुत्वं स्यात्? अभावधर्मस्य वा? उभयधर्मस्य वा? तत्र भावधर्मस्यासिद्धत्वम् अभावधर्मस्य विरुद्धत्वम्, उभयधर्मस्यानैकान्तिकत्वम्। एतदभिप्रेत्यैव प्रत्यक्षसूत्रे वार्तिककारा आहुः—

सत्ता च नानुमानेन कस्यचित् प्रतिपद्यते।
धर्मेणान्यद्विशेष्यं चेत् पक्षोऽसिद्धविशेषणः॥
तस्माददृष्टपूर्वत्वात् केनचिद्वस्तुना सह।
धर्मस्य नानुमेयत्वमसाधारणवस्तुवत्॥ इति।

तस्माद् यागस्वर्गसाध्यसाधनभाव इवाऽपूर्वेऽपि न प्रत्यक्षानुमानयोः प्रवृत्तिः। नाऽपि शब्दः, तदनुपलम्भात्। यदाह वार्त्तिककाराः—

पदवाक्ये न चैतस्य वाचके शृणुमः क्वचित्।
शब्दगम्यत्वमप्यस्य तेन नैवोपपद्यते॥

तत्र पदं तावन्न किञ्चित्साक्षादेतस्य वाचकमस्ति यत्त्वपूर्वमिति पदं तत्—

प्रमाणपञ्चकाज्ञानादपूर्वं षष्ठगोचरः ।
तस्मादन्वर्थनामेतन्न वस्तुत्वेन गम्यते ॥

इति रीत्या अन्वर्थत्वात् सुतरामस्तित्वं बाधते। वाक्यस्य त्ववाचकत्वादेवा-प्रामाण्यम् । येऽपि शब्दान्तरादयः श्रुतिलिङ्गादयश्च शब्दप्रकारास्तेऽपि च स्वभावसिद्धे वस्तुनि भेदे विनियोगे वा कारणं न सद्भावे कस्यचिदित्यपूर्वं प्रत्यप्रमाणम् । विधिप्रति-षेधविषयत्वाच्च समस्तस्य वेदस्य न क्वचिद्वस्तुस्वरूपप्रतिपादनार्थत्वं भवतीति नागम-गम्यमपूर्वम् । उपमानगम्यमपि काममनुपलभ्यमानशशविषाणादिसारूप्यादसद्रूपमेवोपमेयं भवेत् । न च श्रुतयागस्वर्गसाध्यसाधनभावान्यथानुपपत्तिरेव तत्साधिका। न हि अन्यथा क्षणिकयागस्य कालान्तरभाविस्वर्गसाधनत्वमुपपद्यते । अतः प्रमाणान्तरा-भावेऽपि श्रुतार्थापत्तिरेवाऽपूर्वसद्भावे प्रमाणमिति वाच्यम्, साध्यसाधनभावस्या-न्यथानुपपत्तावप्यपूर्वस्य तदुपपादकत्वाभावात् कल्पनानुपपत्तेः । नह्यपूर्वे कल्पिते तेनैव स्वर्गजननादपूर्वोत्पत्तिं प्रत्यन्यथासिद्धस्य यागस्य स्वर्गजनकता सम्भवति । न चापूर्वस्य शक्तिरूपत्वादवान्तरव्यापारत्वाद्वा ज्वालादिभिरिव न तेन यागस्यान्यथासिद्धिः, शक्ति-व्यापारयोः शक्तिमद्व्यापारवन्निष्ठत्वनियमेन शक्तिमति व्यापारवति च यागे नष्टे शक्ति-व्यापारयोरवस्थानानुपपत्तेः । यदि च छलबलकल्प्यस्यापूर्वस्यात्मनिष्ठत्वं कल्प्यते तदा नोक्तानुपपत्तिः । यथोक्तम्—

यदि स्वसमवेतैव शक्तिरिष्येत कर्मणाम् ।
तद्विनाशे ततो न स्यात्कर्तृस्था तु न नश्यति ॥
शक्तिः कार्यानुमेयत्वाद्यद्गतैवोपयुज्यते ।
तद्गतैवाभ्युपेतव्या स्वाश्रयान्याश्रयाऽपि वा ॥ इति ।

तदाऽपि—

अर्थापत्त्यापि नैवैतदस्तीत्येवं प्रतीयते ।
अन्यथाप्युपपन्नत्वात् फलयागादिसंगतेः ॥

यदि यागस्य विनाशित्वादन्येन तत्सम्बन्धिना फलं साध्यमानं यागेन साधितं भवति तदा यागध्वंस एव फलजनकत्वं कल्प्यताम् । ध्वंसे यागजन्यत्वं च क्लृप्तमेव केवलं फलजनकत्वं कल्पनीयमिति लाघवम् । अपूर्वकल्पनायां तत्सद्भावस्तस्य स्थायित्वं यागजन्यत्वं स्वर्गजनकत्वमिति बहुतरं कल्पनीयमापतति । किञ्च, विनाशिनि हि कर्मणि चोदिते विनाशस्योपस्थितत्वात्तस्यैव व्यापारत्वं युक्तम् । यथाह—

यद्वा कर्मविनाशोऽयं फलं न साधयिष्यति ।
भङ्गियागविधानाद्धि तदयत्नेन कल्प्यते ॥ इति ।

एतेन तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयतीत्यर्थवादोपात्तदेवताप्रसादस्यैव रात्रिसत्रन्यायेन द्वारत्वोपपत्तेर्नानुपस्थितापूर्वकल्पनं युक्तमिति वेदान्तिमतमपि निराकृतम्। उपस्थितध्वंसद्वारकत्वेनैव नैराकाङ्क्ष्ये रात्रिसत्रन्यायानवतारात्। देवताप्रसादस्यापि इच्छाविशेषरूपस्य क्षणिकत्वेन यागतुल्ययोगक्षेमत्वाच्च। ध्वंसस्य कारणत्वे कारणीभूताभावप्रतियोगित्वेन यागस्य प्रतिबन्धकत्वमपि न सम्भवति, यतः, यस्मिन्नभावे संसर्गाभावत्वेन कारणता तत्प्रतियोगिकत्वस्यैव प्रतिबन्धकत्वात्, अत्र तु कारणत्वं ध्वंसत्वेन न तु संसर्गाभावत्वेनेति नास्ति दोषः। ध्वंसस्याभावरूपत्वादभावस्य केवलस्य कुत्रापि कारणत्वं न दृष्टम्, वार्तिकारस्तु आह:—'न च लोकेऽपि क्वचिदभावः कारणत्वेन दृष्टः, यदि तु क्वचिदुदाह्रियेत, शक्यं तत्र भावान्तरं दर्शयितुं न त्वत्रापूर्वादृते तादृक् किञ्चिदस्तीति'। भट्टसोमेश्वरोऽपि—

'अत एवाचार्यैः' :

> 'स्वकाले यदकुर्वंस्तत्करोत्यन्यदचेतनः।
> प्रत्यवायोऽपि तेनैव नाभावेन स जन्यते'॥

इति विहितमकुर्वन्यदन्यत्करोतीति भवद्भिर्विहिताकरणनिमित्तस्यान्यकरणस्य प्रत्यवायनिमित्तत्वाभिधानादवज्ञायामेव वा करणस्य निमित्तत्वोपपत्तेर्विहितावज्ञानमेव प्रत्यवायहेतुत्वेनोक्तम्। 'नाभावेनैव जन्यते' इत्येव शब्दोत्कर्षेण केवलस्य हेतुत्व निरस्तम्। एवं च विहितस्याननुष्ठानान्नरः पतनमृच्छतीति स्मृतिरनुगृहीता भवति। निमिषितादेस्तु हेतुत्वे विहिताकरणस्य किञ्चित् करणत्वभावात् स्मृतिबाधापत्तिः। एवं वाव स देवतामवरुणद्धि योऽलमग्निहोत्राय स नाग्निहोत्रं जुहोतीति वाऽपरोध्यशब्देन अवज्ञाभिधानात् सैव प्रत्यवायहेतुर्वेदादवसीयते। निमिषितादेस्तु हेतुत्वं निष्प्रमाणकमेव। तस्मादवज्ञारूपाशयविशेषरूपस्य भावान्तरस्य तत्र संभवान्न शुद्धस्य क्वचिद् हेतुता दृष्टेति ग्रन्थार्थः' इति। तदतिशयमात्रम्, शुद्धस्याऽभावस्याऽपि कारणत्वाङ्गीकारे बाधकाभावात्। अत एवानुपलब्धेरभावरूपाया एव घटाद्यभावग्राहकत्वमङ्गीकृतम्।

ननु ध्वंसस्यैव व्यापारत्वे तस्याविनाशित्वेन कीर्तनप्रायश्चित्तादिना नाशानुपपत्तेः 'धर्मः क्षरति कीर्तनात्' प्रायश्चित्तेन नश्यन्ति पापानि समुहान्त्यपि इत्यादिशास्त्रविरोधः। नह्यनयोः शुभाशुभकर्मनाशकत्वम्, तयोराशुतरविनाशित्वेन नाशकारणनपेक्षणत्, अतः कीर्तनप्रायश्चित्तादिनाश्यं यागादिजन्यमपूर्वमावश्यकमिति। चेत्? न क्लृप्तध्वंसस्यैव व्यापारत्वेऽवधारिते कीर्तनादीनां फलोत्पत्तिप्रतिबन्धकत्वमात्रकल्पनात्। सर्वथा नास्त्यपूर्वमिति प्राप्ते: ब्रूमः—फलं तावत्प्रधानकालान्तरभावीति। निर्विवादम्। नहि निरतिशयसुखदुःखरूपयोः साङ्गप्रधानजन्यस्य न प्रधानमात्रानुष्ठानादुत्पत्तिः। अतः कालान्तरभाविफलोत्पत्तिर्न क्षणिकात् कर्मणोः व्यापारमन्तरेण संभवतीति मध्ये कश्चन व्यापारः कल्पनीयो यः श्रुताविरोधी भवेत्। 'धर्मः क्षरति कीर्तनात्' प्रायश्चित्तेन

क्रमे च प्रथमेऽध्याये प्रमाणलक्षणं वृत्तमिति भाष्येण सकलस्यैवाध्यायस्य प्रमाणलक्षणत्वाभिधानात् असमाप्ते प्रमाणलक्षणे मध्ये वाक्यार्थव्याख्यानस्यासम्बद्धत्वापत्तेरित्याक्षिपति — **एवं स्मृतिसहितस्येति।** सकलवेदप्रामाण्यासिद्धौ स्मृतिविचारायोगात्स च न सम्भवति। ततश्च तत्सिद्ध्युपोद्बलनाय स्मृतिसाहित्योक्तिः। 'तेजो वै घृतं स्रुवेणावद्यतीत्यादेः सन्दिग्धार्थनिर्णये व्यापाराभावेऽपि श्रुतिविध्यर्थत्वेन प्रामाण्यसिद्धेस्तद्विचारात्प्रागपि सकलवेदप्रामाण्यसिद्धिरविरुद्धेति सूचनार्थम् — **वाक्यार्थ इत्युक्तम्।** वाक्यार्थव्याख्यानावसरत्वादेव च गुणविधिरयं प्रतीयते, स च न सम्भवति ततश्चाप्रमाणमित्यप्रामाण्याशङ्कयैवात्र गुणविधित्वशङ्केत्यप्ययुक्तम्। सिद्धेऽपि प्रामाण्ये कस्यार्थस्य प्रमाणमिति विषयविशेषविचारात् प्रमाणलक्षणसङ्गतिरित्यन्येषां समाधानमुपन्यासपूर्वकं दूषयति — **केचिदिति।** पूर्वपक्षाभिधानार्थत्वेन चाद्यसूत्रव्याख्या न युक्तेत्याह — **येऽपि चेति।** विधिना त्वेकवाक्यत्वादिति हि तुशब्दोक्तेन तुल्यं च साम्प्रदायिकमित्यनेन वा क्रियार्थत्वेन हेतुना यदुद्भिच्चित्रादिशब्दानां विध्यादित्रयान्तर्भाववचनमनेन सूत्रेण क्रियते। तत् सिद्धान्तिनो नानिष्टमित्यर्थः।

स्वमतेन समाधत्ते — **तस्मादिति।** आद्ये अधिकरणे विचारस्वरूपमाह **तत्रेति।**

यद्यप्यध्ययनविधिसामर्थ्यादेवोद्भिच्चित्रादिशब्दानामप्यानर्थक्यं निराकृतं। द्वेधापि च प्रामाण्योपपत्तेर्न द्वाराभावेन प्रत्यवस्थानं युक्तम्. मत्वर्थलक्षणादेश्चानर्थक्याज्ज्यायस्त्वान्न तद्भयेनानर्थक्याङ्गीकरणं युक्तम्। आनर्थक्यासम्भवाच्चाप्रसिद्धस्याप्युद्भिच्चित्रादिशब्दस्य तृतीयागतकरणत्वबलात् करणत्वयोग्यद्रव्यविशेषवाचित्वस्य नामधेयत्वाभावेऽवश्यङ्कल्प्यत्वाच्च। न पौष्णं पेषणं विकृतौ प्रतीयेतास्याचोदनात् प्रकृतौ इत्यादिवदुत्तरविवक्षायाः प्राप्त्यर्थं सामान्यन्यायसिद्धस्यैव क्रियार्थत्वस्यानेकविचारान्तरितस्य स्मरणं क्रियत इति वाच्यम्, तत्र ह्यग्निष्टोमप्रकरणादुत्कृष्टं सन्तर्दनम्, प्रथमप्रयोगाच्चोत्कृष्टः प्रवर्ग्यः सर्वत्रान्यत्र भवतीत्युक्ते तद्वत्पेषणमपि दर्शपूर्णमासप्रकरणादुत्कृष्टं किमविशेषाच्च रौ, पशौ, पुरोडाशे च भवत्युत चरावेवेत्युपस्थितस्य विचारस्यान्यत्र सङ्गत्यभावादिहैव वाक्यप्रकरणविरोधाविरोधचिन्ताप्रस्तावेन अवश्यकर्त्तव्यत्वात् तत्प्राप्त्यर्थं पेषणस्योत्कर्षाभिधानं युक्तम्। द्रव्यसंस्कारस्यापि च बर्हिर्लवनादेरङ्गप्रधानेषु समानविध्ये विचारिते, स्वयं कर्तृकताप्यङ्गप्रधानेषु समाना न वेति विचारेण प्राप्तानामृत्विजां विनियोजिकायाः समाख्यायाः लिङ्गप्रकरणाभ्यां विरोधोऽस्ति न वेति विचारिते' अन्यत्रापि समाख्यायाः पूर्वैः सह विरोधाविरोधविचारे समाप्ते, यत्प्रसक्त्या यो विचारस्तत्समाप्तौ स एव बुद्धिस्थो भवतीति बर्हिर्लवनादिविचारप्रसक्तानुप्रसक्तिसमाप्त्या बुद्धिस्थस्य बर्हिर्लवनादिविचारस्य यूपावटस्तरणबर्हिषि लवनमस्त्युत नेति शेषललक्षणसङ्गतोत्तरविवक्षया स्मरणं युक्तम्। गुणविधिनामधेयचिन्तायास्तु लक्षणाऽसङ्गतत्वेनेह कर्त्तव्यत्वाभावात्। भावार्थाधिकरणे चोद्भिच्चित्रादिशब्दानां फलपदान्वयनिरासेन यज्यन्वयेऽभिहिते किं गुणविधित्वेनैषान्तदन्वयो, नामधेयत्वेन वेति प्रसङ्गादुभयथापि

यज्यन्वयासम्भवे बलात्फलपदान्वयापत्तेस्तन्निरासार्थं भावार्थाधिकरणशेषत्वेनैव विचारोपपत्तेस्तत्समाप्तौ चैवमप्यपूर्वभावाद्भावशब्देभ्योऽपूर्वं नामपदेभ्यो वेति चिन्ता न युक्तेति प्रकृतचिन्ताक्षेपेणापूर्वविचारस्यापि सङ्गत्युपपत्तेस्तद्विवक्षयोद्भिदादिप्रामाण्यस्मरणमयुक्तम्, प्रामाण्यस्मारणेनैव प्रसक्तत्वाल्लक्षणासङ्गतस्यापि विचारस्य कर्त्तव्यत्वोक्तौ स्मारणात्कर्त्तव्यत्वम्, कर्त्तव्यत्वे च सति तत्सङ्गतिसिद्धयर्थं स्मारणमितीतरेतराश्रयापत्तिः। अत एव च टुप्टिकायां केचिदानर्थक्येनोत्पूत्रं पूर्वपक्षं कुर्वन्ति, सूत्रेण तत्परिहारमित्येतन्मतमुपन्यस्य, तत्रानर्थक्यस्य पूर्वमेव सर्ववेदविषयस्य निराकृतत्वादिति स्वयमेव दूषितम्। तथापि नामधेयत्वे सति उद्भिच्चित्रादिशब्दानां धर्मप्रमोपयोगोऽस्त्युत नेतीति चिन्ता क्रियमाणा न विरुध्यते। को धर्मः, कथं लक्षण इति हि प्रकारवाचिना थमुप्रत्ययेन प्रामाण्यप्रकारोऽपि लक्षणार्थत्वेनाभिहितः। यथोक्तम्—**बृहट्टीकायाम्**।

'चोदनासूत्रनिर्दिष्टो यः प्रमाणपरिग्रहः।
सप्रकारः स आद्येन लक्षणेन प्रपञ्चितः॥' इति।

किं प्रत्यक्षश्रवणमेव वेदस्य प्रामाण्यप्रकारः, अथ मन्वादिस्मरणेनोपस्थापनमपीति सामग्रीगतप्रकारे तृतीयपादेन चिन्तिते किमप्रवृत्तप्रवर्त्तन-स्तुति-विहितार्थप्रकाशनान्येव प्रामाण्यद्वाराण्युत नामधेयतापीति, अवान्तरव्यापाररूपप्रकारान्तरचिन्तार्थोऽयमारम्भो लक्षणपूर्वपादाभ्यां सङ्गच्छते। प्रामाण्यस्वरूपविषयत्वे त्वस्याश्चिन्तायाः प्रत्यक्षवेदविषयत्वात्स्मृतिविचारात्प्रागेव कार्यतापत्तेर्न स्मृतिपादानन्तरमारम्भो युक्तः तस्मान्नामधेयानां धर्मप्रमोपयोगोऽस्ति न वेति इह विचारार्थः। तत्सिद्धयर्थं चैषां विध्यादित्रयान्यतमान्तःपातोऽस्ति, उत नेति चिन्तनीयम्।

त्र्यंशवेदातिरिक्तत्वे नामधेयानामनुष्ठानानौपयिकत्वेन धर्मप्रमायोगानुपपत्तेरिति नामधेयानर्थक्येऽप्याम्नायस्येति सूत्रं योजयन् पूर्वपक्षमाह—**किं तावदिति**।

ननु सर्ववेदविषयस्यानर्थक्यस्याध्ययनविधिबलेन तत्रैव सिद्धान्ते निराकृतत्वान्नामधेयानर्थक्येऽप्युद्भिच्चित्रादिशब्दानां गुणविधित्वेनापि प्रामाण्योपपत्तेर्मन्त्रार्थवादवत् पुनः प्रत्यवस्थानायोगात् नानर्थक्याशङ्का युक्तेत्याशङ्क्य नोद्भिच्चित्रादिशब्दानां स्वरूपेणानार्थक्यं विवक्षितम्, किं तु नामधेयत्वे सतीत्येतमर्थं दर्शयितुं वृद्धवाक्यमुदाहरति—**आह चेति**। यद्युद्भिच्चित्रादिपदं नामधेयत्वेन त्र्यंशाद्वेदादधिकमतिरिक्तमिष्यते ततो धर्मानुपयुक्तार्थाभिधायित्वादानर्थक्यं प्रपद्यत इत्यर्थः। अनुपयुक्तं सदितिपाठे नामधेयत्वेन त्र्यंशाद्वेदादधिकं सदानर्थक्यं प्रपद्यत इत्यर्थः। ननु त्र्यंशवेदातिरेकेऽपि नामधेयत्वेनैव धर्मप्रमोपयोगो भविष्यतीत्याशङ्क्य—**त्र्यंशेत्युक्तम्**। ननु नामधेयत्वेऽप्युद्भित्संज्ञको यागः कार्य इति विध्युद्देशान्तर्गतिसम्भवात् फलोद्भेदनिमित्तोद्भित्संज्ञकत्वात् प्रशस्तोऽयं याग इति चार्थवादान्तर्गत्युपपत्तेः संज्ञात्वेन वानुष्ठेयसंज्ञियागप्रकाशनसामर्थ्यान्मन्त्रकार्योपपत्तेः कथमतिरेकापत्तिरित्याशङ्क्याह—**न हीति**। यागानुष्ठेयताया यजेतेत्येतावता सिद्धेरेतद्विधेयत्वेनैव च यागविधेयत्वेनैव च यागविशेषावधारणसिद्धेः साध्यांशाद्यभिधानेनैव विध्युद्देशान्तर्भावो वाच्यः। न च नामधेयत्वेऽन्यतमांशाभिधानं

सम्भवतीत्याह—**साध्येति** । संज्ञायाः संज्ञिस्वरूपनिर्देशार्थत्वेन प्राशस्त्यपरत्वाभावास्तुतिबुद्ध्यनुत्पादकत्वेनार्थवादातिरेकमुपपादयति— **स्तुतीति** । स्वरूपनिर्देशार्थत्वेनैव च कृतार्थत्वात् प्रयोगार्हरूपाभावेन कर्मकालप्रयोज्यत्वाभावात्, विभुत्वेन च कर्मणः क्वांशे[1] प्रयोग इत्यज्ञानात् कर्मस्वरूपप्रकाशनार्थत्वायोगात् कर्माङ्गभूतस्य चोद्भिदादिसंज्ञकस्य प्रकाशनार्हस्याभावान्न मन्त्रान्तर्गतिरित्याह **कर्मेति**[2] । उद्भिच्चित्रादिपदेषु अध्येतृभिर्मन्त्रशब्दाप्रयोगात् मुख्यमन्त्रत्वशङ्कानुपपत्तेः तत्कार्यकारित्वमात्रेण मन्त्रान्तर्गतिर्वाच्येति सूचयितुं कार्यशब्दः । ननु विध्यादित्रयातिरेकेऽपि[3] नामधेयस्य गुणफलोपबन्धोपयोगित्वेनार्थवत्त्वं भविष्यतीत्याशङ्क्याह - **न चेति** । विधित एव यागविशेषावधारणसिद्धेर्गुणफलोपबन्धोऽपि सेत्स्यतीत्याशयः । उपसंहरति—**इतीति** ।

सूत्रोक्तं सिद्धान्तमाह— **अत्रेति** । उक्तेनाध्ययनविधिसामर्थ्यलक्षणेन हेतुना सर्वस्य वेदस्य त्र्यंशत्वावधारणात् यदुद्भिच्चित्रादिशब्दस्य नामधेयत्वे सत्यंशत्रयातिरेकापत्तेरप्रामाण्यं पूर्वपक्षिणोक्तम्, तन्न सिध्यति, नामधेयस्यापि वेदत्वेनांशत्रयान्तःपातावसायात् इत्यर्थः । एतेन श्लोकेनोक्तमस्माभिरित्याद्यन्यतमस्मै प्रयोजनाय भवेयुरित्यन्तं भाष्यमाद्यसूत्रव्याख्यानार्थमिति सूचितम् । नामधेयप्रामाण्यविचारसिद्धान्ताभिधानार्थमप्येतत्सूत्रं गुणविधिनामधेयविचारपूर्वपक्षेऽप्यध्याहारेण शक्यं योजयितुमिति प्रदर्शनायादौ भाष्यकृता द्वितीयविचारोपक्रमः कृतः । वार्तिककृता त्वध्याहाररहितस्य सूत्रस्य पूर्वपक्षाभिधानासामर्थ्यमुक्तम् । उभयाभिधानशक्तस्यापि सूत्रस्य वाक्यभेदापत्तेरुभयत्र तात्पर्यासम्भवमभिप्रेत्य द्वितीयाधिकरणपूर्वपक्षस्यानुमितत्वोक्तिरिति भाष्यवार्त्तिकयोरविरोधः । तन्न तावदित्यादिभाष्यं नामधेयस्य मन्त्रार्थवादान्तर्भावशङ्कानिराकरणार्थं तदन्तर्गतावप्यन्यतमांशान्तर्गतिसिद्धेरतदर्थकमित्याह— **यदेति** । निर्द्धारितरूपांशविशेषान्तर्गतिं विनान्यतमांशान्तर्गत्यनिर्वाहात् । यदा यस्मात्कारणात् तन्नामधेयं विध्याद्यर्थत्रयान्यतमार्थमित्युक्तमपि विशेषानिरूपणात् निर्वाहमगत्वैव स्थितम्, तदा तस्मात्कारणात् **किमर्थमिति** विशेषविचारः कर्त्तव्य इत्यर्थः । न त्येकस्मिन्विचारे पर्यवसिते, विचारान्तरारम्भोक्तिरेषा तथा सत्यधिकरणत्रयापत्तेर्द्वयोरधिकरणयोरित्यनुपपत्तिप्रसङ्गात् । तन्न तावदिति भाष्यं व्याचष्टे—**न तावदिति** । एतदेवाक्षेपपूर्वकमुपपादयति—**कथं पुनरिति** । नावयववाच्ययं शेषशब्दः । किं तूपयुक्तेतरवाची । वायव्यं श्वेतमित्यादौर्हि 'स एवैनं भूतिं गमयतीत्यन्तस्यैकस्य वाक्यस्य मध्ये भूतिकामान्तेभ्यः साध्यादिप्रतिपादनेन विधेयार्थाभिधानोपयुक्तेभ्यः पदेभ्यः परिशिष्टानां 'वायुर्वै क्षेपिष्ठे'त्यादीनामर्थवादतेष्यते । ननु विधिवाक्यावयवत्वरूपैकवाक्यत्वमात्रेण भूतिकामादिपदानामप्यर्थवादत्वापत्तेः, नामधेयानां च विधिविषयविशेषावधारणार्थत्वेन विधेयार्थाभिधानोपयुक्तत्वात् न परिशिष्टताऽस्तीत्यर्थः । ननु विधिविशेषादेव विधेयविशेषावधारणसिद्धेर्नामधेयानां तादर्थ्यासम्भवात् परिशिष्टता

१. अस्येति अधिकं पाठः २ पु० पा० ।　　२. कर्माङ्गभूतेति २ पु० पा० ।

३. आधिक्येऽपीति २ पु० पा० ।

भविष्यतीत्याशङ्क्याह—**तदिति**। उत्पत्तिवाक्ये विधेयविशेषावधारणस्यान्यतः सिद्धावपि, समे यजेतेत्यादौ दर्शपूर्णमासादिनामधेयं विना विशेषावधारणासिद्धेर्वक्ष्यमाणत्वात्। विध्युद्देशान्तर्गतिस्तावत्सम्भवत्येव। **न च** तत्सम्भवे स्तुत्यर्थत्वाङ्गीकरणं युक्तमिति, प्रधानं विधिः अङ्गं स्तुतिः, तत्र प्रधानविशेषणसम्भविनस्तद्गामित्वमेव न्याय्यमित्यत्रोक्तमित्यर्थः। गुणगुणिसम्बन्धकीर्त्तनात्मकत्वाच्च स्तुतेर्न गुणमात्रैकवाचिनैकेन पदेनोपपत्तिरित्याह—**न चेति**। ननु संज्ञया गुणिभूतस्य संज्ञिनो धातूपात्तस्योपस्थापनोपपत्तेः स्तुतिः सेत्स्यतीत्याशङ्क्याह—**न चेहेति**। संज्ञायाः संज्ञिव्यवहारार्थत्वेन स्तुतिपरत्वायोगान्नेह नामधेये स्तुतिप्रतिपत्तिः सम्भवतीत्यर्थः। ननु नामधेयस्यापि फलोद्भेदनादिगुणयोगनिमित्तत्वात् सहस्राक्षादिवत्स्तावकत्वोपपत्तिरित्याशङ्क्याह—**यद्यपीति**। संज्ञायाः संज्ञिव्यवहारार्थत्वेन कृतार्थायाः संज्ञायाः स्तुत्यर्थत्वमेव तावत्स्वमनीषिकामात्रेण कल्प्यम्, न तु युक्तियुक्तं कथंचित्कल्पितमप्येतत्फलोद्भेदनस्य कर्त्तेति धातूपपदप्रत्ययार्थसमुदायस्य तृतीययाऽन्यार्थत्वप्रतीतेः प्रातिपदिकार्थप्राधान्यविघाताद् बाध्येतेत्यर्थः। न मन्त्र इति। मन्त्रान्तर्गतिशङ्कानिराकरणार्थं भाष्यं व्याख्यातुं मन्त्रस्वरूपनिराकरणे तावत्प्रायिकस्यास्यन्तत्वादिलक्षणस्य, अभिधानचोदकत्वस्य चाध्येतृप्रयोगस्य च व्यापकस्याभावं सूचयितुं हेतुमाह—**न चास्येति**। ननु स्वरूपतो मन्त्रत्वाभावेऽप्यूहप्रवरनामधेयवत् प्रयोजनाकाङ्क्षायां प्रयोजनान्तरायोगेनानुष्ठेयस्मारकत्वावगमात् मन्त्रकार्यकरत्वेनौपचारिकं मन्त्रत्वं भविष्यतीत्याशङ्क्य स्वयं तावन्निराकरोति—**न चेति**। पदार्थवात्रस्यानुष्ठेयत्वात् प्रयोजनत्वानुपपत्तेर्वाक्यार्थस्यैवानुष्ठेयत्वेन प्रयोजनत्वादेकस्य च पदस्य वाक्यार्थप्रतिपादनासामर्थ्यात् प्रयोजनाकाङ्क्षैव तावन्नास्ति। सत्यामपि वा प्रयोजनाकाङ्क्षायां स्मारकत्वं न युक्तम्, करणत्वप्रतीत्या स्मरणार्हत्वापादकप्रातिपदिकार्थप्राधान्यबाधादित्यर्थः। एतच्च ब्राह्मणेनैकवाक्यीभूतस्य कर्मकाले स्वतन्त्रप्रयोज्यत्वाभावान्मन्त्रकार्यकारित्वानुपपत्तेर्मन्त्रकार्यकरत्ववादिनोद्भिदादिनामधेयानां स्वातन्त्र्यमवश्याभ्युपगन्तव्यम् इत्यापाद्यैकपदत्वमुक्तम्।

वस्तुतस्तु धातुसामानाधिकरण्यं विना नामधेयत्वायोगात् भिन्नवाक्यत्वे प्रकारान्तरेणोपयोगानुपपत्तेरानर्थक्यस्यापरिहार्यत्वादिष्टमेवैकवाक्यत्वम्। अत एव सिद्धवद्वायुक्षेपिष्ठादिवदेकवाक्यतावगम्यत इत्युक्तम्। अनङ्गीकृतनामधेयत्वस्य तूद्भिदादिपदस्वरूपस्यार्थवादत्वनिराकरणे सत्यसावेकवाक्यत्वशङ्का, तदङ्गीकारेण च विध्युद्देशान्तर्गत्या परिहारो न कथंचिद्युज्यते। यदा च मन्त्रकार्यकरणत्वाङ्गीकरणे ब्राह्मणैकवाक्यत्वानुपपत्तेः स्वतन्त्रैकपदता पद्यते, तदा सामानाधिकरण्याभावेन नामधेयत्वायोगात्, तदभिधेयस्य चार्थस्य वाक्यान्तरेण कर्मण्यविधानात् प्रयोगसमवेतार्थाभावात्स्मारकत्वं न युक्तमित्याह—**न चैतदिति**। अनेन चैवंजातीयकस्येति भाष्यमुद्भिच्चित्रादिशब्दानां नामधेयत्वे तद्वाच्यस्य प्रधानकर्मण एव प्रकाशनीयस्य सद्भावादयुक्तमाशङ्क्यापाद्योक्त्या व्याख्यातम्।

यद्वा कर्मणो विभुत्वेनास्य क्वांशे प्रयोग इत्यज्ञानात् कर्मस्वरूपप्रकाशनार्थत्वानुपपत्तेः। कर्माङ्गप्रकाशनार्थत्वं वाच्यम्। न चैतदभिधेयः कर्माङ्गभूतोऽर्थोऽस्तीत्याशयः। नन्वसमवेतार्थत्वेऽपि स्तोत्रशस्त्रमन्त्रवदङ्गत्वं भविष्यतीत्याशङ्क्याह—**न चेति**। स्तोत्रादिसाधनत्वेन विधानाभावात् प्रकरणपाठेनैषां कर्माङ्गप्रकाशनेनैव वाच्यः। न चासौ सम्भवतीत्याशयः। ननूद्भिदादिशब्दवाच्यस्य खनित्रादेर्मन्त्रवर्णात् कर्मणि समवायः कल्पयिष्यते, अत आह—**मान्त्रवर्णिकेति**। चित्राग्निहोत्रादिशब्दानां द्रव्यवाचित्वानाशङ्कनादुपलक्षणार्थो द्रव्यशब्दो द्रष्टव्यः। श्रुत्यविनियुक्तत्वाच्चास्य स्वार्थसमवायकल्पकत्वं नास्तीत्याह—**न चेति**।

सम्भवत्यपि नामधेयत्वे कर्मस्वरूपप्रकाशनार्थत्वे च ब्राह्मणाद्विच्छिन्नस्यैकपदमात्रस्य मन्त्रत्वानाशङ्कनात् तादृशस्य चाख्यातान्वयं विना नैराकाङ्क्ष्याभावान्न कर्मकालप्रयोज्यत्वं सम्भवतीत्याह—**न चेति**। नन्वध्याहारेण निराकाङ्क्षीकृत्य कर्मकालप्रयोज्यत्वं भविष्यतीत्याशङ्कां निराकुर्वन् कर्मकालाप्रयोज्यत्वमेवोपसंहरति - **अतश्चेति**। अतः साकाङ्क्षत्वेनाप्रयोगार्हत्वान्न कर्मकाले प्रयोगः सम्भवति। न चाध्याहारेण निराकाङ्क्षीकृत्य प्रयोगोऽविनियुक्तत्वेन प्रत्यक्षविनियोगान्यथानुपपत्तिकल्प्याध्याहारायोगादित्यर्थः। नामधेयत्वेन च प्रत्यक्षब्राह्मणैकवाक्यत्वप्रतीतेर्न श्रुताध्याहारेण निराकाङ्क्षीकरणं युक्तमित्याह—**स्फुटश्चेति**। मन्त्रानन्तर्गतिमुपसंहरति—**इतीति**। पारिशेष्यादिति भाष्यं मन्त्रार्थवादान्तर्गत्यसम्भवेऽपि नामधेयत्वोपपत्तेः पारिशेष्याद् गुणविध्यसिद्धेरयुक्तमाशङ्क्य समाधातुमाह—**तस्माविति**। नामधेयस्य विध्युद्देशान्तर्गतिमात्रं पारिशेष्येणाभिमतम्। गुणग्रहणं तूत्तराधिकरणपातनिकार्थमित्याशयः। विध्युद्देशान्तर्गतस्यैव नामधेयस्य गुणविधिर्नामधेयं वेत्येवं विचारः क्रियत इति भावे लकारः विधेयाङ्गसमर्पकत्वाभिप्रायो गुणविधिशब्दः। नामधेयस्य च विध्युद्देशान्तर्गतेर्न नामधेयं विधायिष्यत इत्येतद्भाष्यव्याख्याने विस्तरेणोपपादयिष्यमाणत्वात् तदवष्टम्भेनेह सिद्धवदभिधानम्।

उद्भिदादिशब्दानां च नामधेयत्वं याज्ञिकप्रसिद्ध्यैव सिद्धम्। स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि, पशुः, सोम इत्यादिलिङ्गदर्शनैश्चावधारितमिति, अविचारितसिद्धमङ्गीकृत्य नामधेयत्वस्य धर्मप्रामाण्यप्रकारताऽस्त्युत नेत्याद्येनाधिकरणेन विचारिते, क्वास्ति नामधेयम्, क्व वा नेति कोष्ठशोधनिकार्थमुत्तरः प्रपञ्चः। सोऽपि वाक्यार्थव्याख्यानत्वेन प्रमाणलक्षणासङ्गतिप्रसङ्गान्नोद्भिदादिशब्दो गुणविधिर्नामधेयं वेत्येवं रूपः। किं तु यथा सर्ववाक्यशेषाणाम् आनर्थक्यनिराकरणेनार्थवादत्वेऽर्थवादाधिकरणेनैव सिद्धे तद्दृढीकर्तुं विधित्वाशङ्कानिराकरणायोत्तराधिकरणद्वयं तथोद्भिदादिशब्दानां याज्ञिकप्रसिद्ध्यवधारितेन नामधेयत्वेन धर्मप्रमोपयोगे साधिते प्रसिद्ध्यादिहेतुकेन गुणविधित्वेनैव धर्मप्रमोपयोगसिद्धेः किं क्लिष्टेन नामधेयत्वेनेत्याशङ्क्य नामधेयत्वमेव दृढीकर्तुं गुणविधित्वाशङ्कानिरासायोत्तराधिकरणचतुष्टयम्। ततो वाजपेयाधिकरणे

तन्त्रसम्बन्धेन विशिष्टविधिसम्भवाद् गुणविधिपक्षोक्तमत्वर्थलक्षणादिदोषपरिहारेण प्रत्यवस्थानमाशङ्क्य वैरूप्यात्तन्त्रसम्बन्धानुपपत्तेर्दोषपरिहारासम्भवेन गुणविधित्वनिराकरणे दृढीकृते विशिष्टविधावाख्यातोपपदार्थयोर्द्वयोर्विधानात्सन्निकृष्टविध्यसम्भवनिबन्धनत्वाच्च विप्रकृष्टविधेर्युगपत्सम्भवासम्भवविरोधान्न क्वापि विशिष्टविधिः सम्भवतीत्याशङ्क्य, आग्नेयाधिकरणे विशिष्टविधौ व्युत्पादिते, बर्हिरादिशब्दाः संस्कारनिमित्ताः जातिनिमित्ता यौगिका वेत्यधिकरणत्रयेण प्रसङ्गाद्विचारिते प्रासङ्गिकसमाप्त्या बुद्धिस्थस्य विशिष्टविधिव्युत्पादकस्य प्रयोजनमुत्पत्तिशिष्टबलीयस्त्वं वैश्वदेवशब्दस्य गुणविधित्वशङ्कानिराकरणार्थं व्युत्पाद्य, अष्टाकपालादिशब्दानामेकवाक्यगतत्वेनोत्पत्त्युत्पन्नशिष्टत्वविभागाभावाद् गुणविधित्वमाशङ्क्याष्टत्वादीनां परस्परविरोधितत्वेनैकवाक्यविधानायोगाद् बलाद्वाक्यभेदप्रसक्तेरुत्पत्तिशिष्टद्वादशत्वावरुद्धे यागेऽष्टत्वादिविध्ययोगादष्टाकपालादिशब्दैर्गुणवृत्त्या द्वादशकपालस्तुतिरिति वैश्वानराधिकरणेऽभिहिते, प्रसङ्गाद् गुणवृत्तित्वलक्षणं तत्सिद्धिसूत्रेणोक्त्वा, यथा विध्युद्देशान्तर्गतस्यापि उद्भिदादिपदस्य नामधेयरूपेण प्रकारान्तरेण धर्मप्रमोपयोगित्वम्, तथा वाक्यशेषस्यापि स्तावकत्वातिरेकेण सन्दिग्धनिर्णायकत्वेनेत्यक्ताधिकरणेनोक्ते स्रुवाधिकरणे वाक्यशेषवत् सामर्थ्यस्यापि सन्दिग्धनिर्णायकत्वेन धर्मप्रमोपयोगव्युत्पादनात् सकलस्य पादस्य प्रमाणलक्षणसङ्गत्यविघातः। भाष्यानुसारेणोद्भिदादिशब्दानां गुणविधित्वेन धर्मप्रमोपयोगित्वं नामधेयत्वेन वेत्युभयथा प्रामाण्यमङ्गीकृत्य प्रकारविशेषव्युत्पादनार्थापि गुणविधिनामधेयचिन्ता, प्रकारस्यापि लक्षणार्थत्वात् न लक्षणसङ्गतिं विहन्ति। प्रामाण्यविषयविशेषनिरूपणार्थेयं गुणविधिनामधेयचिन्ता न प्रकारविशेषनिरूपणार्थेति परव्याख्यादूषणार्थस्तु वार्त्तिककारीयो यत्न इति सर्वमनवद्यम्।

उद्भिद्गुणवतेत्यादिद्वितीयाधिकरणपूर्वपक्षभाष्यं तात्पर्यतो व्याचष्टे—**तत्र तावदिति**। ननूद्भिदादिशब्दानां लोके खनित्रादावप्यप्रसिद्धत्वादवयवव्युत्पत्त्या तु कर्मण्यपि प्रवृत्तिसम्भवात् कथं प्रसिद्ध्या गुणविधित्वनिश्चय इत्याशङ्क्य—**बलवत्त्वेनेत्युक्तम्**। उच्छब्दस्योर्द्धत्वे, भिदेश्च विदारणे लोकव्याकरणयोः प्रसिद्धत्वादुद्भिच्छब्दस्य खनित्रेऽवयवप्रसिद्धिर्बलीयसी, प्रकाशनार्थतायास्त्वप्रसिद्धत्वाद्यागस्य चाबोधकत्वेन प्रकाशकत्वाभावात् उत्पादकत्वेनापि प्रकाशकत्वोपचारे सर्वकर्मणां स्वफलोत्पादकत्वेनोद्भिच्छब्दवाच्यतापत्तेर्यागे प्रसिद्धिर्दुर्बलेति भावः। गुणविधौ त्विति भावः। भाष्यमभ्यधिकमर्थं विदधत इत्यवयवत्वेन प्रवृत्तिविशेषकरत्वमुक्तम्, अर्थवन्तो भविष्यन्तीत्यनेन च प्रयोजनवत्त्वमित्येवं व्याख्यातुं 'प्रयोजनवशेन चाधिकरणात्'—**प्रवृत्तेश्चेत्युक्तम्**। विध्युद्देशान्तर्गतस्योद्भिदादिशब्दस्य गुणरूपमङ्गरूपं वाच्यमित्यनुषङ्गाध्याहाराभ्यां योज्यम्। किमर्थं तदुच्यत इत्यपेक्षायामाख्यातेन विधातुमिति— **विधीयत**। इत्यनेनोक्तं भाष्यमप्युद्भिद्गुणतां यागस्याख्यातेन विधातुमुद्भिदादिशब्दो विधेयगुणसमर्प्पक इत्येवं योज्यम्। धातूपसर्गरूपावयवशक्त्यनुसारेण तावदुद्भिच्छब्दस्योर्द्धविदारणसाधनद्रव्य-

वाचित्वमुपपादयति—**प्रातिपदिकमिति ।** द्रव्यविषयायाः प्रसिद्धेर्बलीयस्त्वोपपादनार्थं न चैषामिति भाष्यावयवं व्याचष्टे—**न चेति ।** भिदिर्विदारण इतिवत् प्रकाशने स्मृत्यभावाद्यागस्याप्रकाशकत्वादौपचारिकप्रकाशकत्वे सत्यप्यतिप्रसङ्गापत्तेरवयवप्रसिद्धयोद्भिच्छब्दस्य यागार्थत्वायोगात्समुदायप्रसिद्धया तदर्थता वाच्या न चासावस्तीति सूचनार्थः समुदायशब्दः ।

ननु लोकप्रसिद्ध्यभावेऽपि यजिसामानाधिकरण्याद्यागार्थतावगम्यत इत्याशङ्कानिराकरणार्थं 'न चेति भाष्यावयवं समानाधिकरण्यावगतस्यार्थस्य पारिभाषिकत्वाभावात् अयुक्तमाशङ्क्य व्याचष्टे—**न चेति ।** वैयधिकरण्येनापि यजिसम्बन्धोपपत्तेः सामानाधिकरण्येन यागार्थत्वस्यावगन्तुमशक्यत्वादलौकिकार्थकल्पना पारिभाषिकी आपद्येत । सा च सम्बन्धस्याशास्त्रहेतुत्वादित्यैन्द्रयधिकरणसूत्रावयवेन निरस्तत्वादयुक्तेत्याशयः । तृतीयया चोद्भिच्छब्दार्थस्य करणत्वावगतेर्द्रव्यस्यैव च करणत्वोपपत्तेस्तदनुसारेणापि उद्भिच्छब्दस्य द्रव्यवाचिताऽवसीयत इत्याह—**तृतीयापि चेति ।** ननु यागस्यापि फलोद्भेदनहेतुत्वात्फलभावनाकरणत्वाच्च तद्वाचित्वेऽप्यवयवप्रसिद्धिः, तृतीया च न विरोत्स्यत इत्याशङ्क्याह—**न चेति ।** यागस्योदूर्ध्वविदारकत्वम्, प्रकाशकत्वं वा तावन्नास्त्येव । करणत्वं तु विधिसामर्थ्यगम्यमपि कर्तृव्यापारव्याप्यत्वरूपकर्मत्वापेक्षत्वेन ततो दौर्बल्यात्तेनाभिभूतं सन्न तृतीयोत्पादनक्षममिति, प्रसिद्धशब्देन प्रकृष्टत्वेन कर्मत्वात् बलीयस्त्वेन न सिद्धं यतस्तेनाभिभवितुं न शक्यत इत्यभिधानात्सूचितम् । कुठारादीनां तु छेदनादौ करणत्वात् उद्यमनादौ च कर्मत्वाद्भिन्नविषयत्वेनाविरोधादनभिभूतं करणत्वं तृतीयोत्पादनक्षममित्याशयः । नन्वर्थवन्तो भविष्यन्ति इतिभाष्यावयवेनार्थवत्त्वस्य तृतीयोपपत्तित्वेनोक्तत्वात् । प्रयोजनवशेन चेति द्वितीयोत्पत्तित्वेन व्याख्या न युक्तेत्याशङ्क्याह—**अर्थवत्त्वादिति ।** प्रवृत्तिविशेषकरत्वोपपत्तित्वद्योतनार्थं तृतीयया युक्त्या प्रागस्य व्याख्येत्याशयः । प्रवृत्तिविशेषकरत्वं व्याचष्टे—**विधायकेति ।** द्रव्यविशिष्टक्रियाविषयप्रवृत्तिहेत्वभिधानेऽपि विधेयसमर्पणे द्रव्यविशिष्टक्रियानुष्ठाने च यथाक्रमं प्रवृत्तौ विशेष इत्यर्थः ।

ननु नामधेयत्वेऽपि संज्ञाविशिष्टे कर्मणि प्रवृत्तेराधिक्यरूपो विशेषोऽस्तीत्याशङ्क्याह—**अन्यथा हीति ।** विधिविशेषादेव यागविशेषसिद्धेर्नामधेयस्यानतिरिक्तार्थत्वात् । अनुच्चारिते तस्मिन्यावती विधायकादीनां प्रवृत्तिः तावत्येवोच्चारितेऽपि स्यादित्यर्थः । उद्भित्पदस्यानुच्चरितस्य प्रवृत्त्ययोगेऽप्याधिक्याभावं त्रयाणां तुल्यं वक्तुमेषामिति बहुवचनम् । प्रसिद्धेर्वार्थवत्त्वोपपत्तित्वसूचनार्थं **प्रागर्थवत्त्वव्याख्येत्याह— अथ वेति ।**

प्रसिद्धस्यापि लोष्ठादेर्निःप्रयोजनत्वात् प्रसिद्धेः प्रयोजनवत्त्वोपपत्तित्वासम्भवमाशङ्क्याभिधेयवाचित्वेनार्थशब्दव्याख्यानमुद्भित्पदस्य गुणे प्रसिद्धत्वात् विधेयगुणसमर्पकस्य सतोऽर्थवत्त्वमित्यर्थः ।

अस्मिस्तु व्याख्याद्वये गुणविधौ हेतुद्वयापत्तेः प्रसिद्ध्यादिभिः पूर्वपक्षे इति श्येनाधिकरणभाष्ये बहुवचनानुपपत्तिप्रसङ्गेनापरितोषाद्धेतुभेदेऽपि प्रवृत्तिविशेषकरत्वेऽपि **प्रयोज**नातिरेकस्यैवोपपत्तित्वं सूचयितुं प्राक् व्याख्येति पारमार्थिकम्। व्युत्क्रमव्याख्याभिप्रायं दर्शयितुमाह—**अथ वेति**। नन्वेवं पृथगस्य हेतुत्वे अर्थवत्त्वेनैवोद्भिदपदस्य प्रवृत्तिविशेषो दर्शितः। किमपरमस्य प्रवृत्तिविशेषोपन्यासेनेति—**आह ततश्चेति**। स्वात्मनि क्रियाविरोधादौपचारिकभेदाश्रयणेनोद्भिदमात्मनः प्रवृत्तिविशेषकरत्वप्रागुक्तमित्यपरितोषादिह विधिपुरुषयोरित्युक्तम्। नामधेयानर्थक्यप्रतिपादकं यदि चेति भाष्यमाक्षिपति—**नन्विति**। समाधत्ते—**नैतदिति**। श्लोकं व्याचष्टे—**यदेति**। किमपरमित्यनेन धातूक्तैव यागव्यक्तिर्नाम्नाभिधेया, ततश्चानर्थक्यमित्येवं सा चेति व्याख्यातम्। अथेत्यनेन जातिश्चेद्धातुनाश्रिता ततः समानाधिकरण्यात्तन्नामतैव प्रसज्येत। सा चानिष्टेत्युत्तराऽवयवो व्याख्यातः। विशेषस्यान्यतः सिद्धिं सिद्धान्तिनोऽप्यभिमतां दर्शयति—**सिद्धत्वादेव चेति**। विशेषस्यान्यतोऽसिद्धौ तत्प्रतिपत्त्यर्थं नामधेयस्यावश्यविधेयत्वापत्तेस्तन्निरासो न युज्येत इत्याशयः। ननु विशेषसिद्धेर्नामधेयाधीनत्वेऽप्यवयवशक्त्यनुसारेणैव कर्मण्यपि प्रवृत्तिसिद्धेः, संज्ञासंज्ञिसम्बन्धविधिनिरासार्थं तद्भाष्यमित्याशङ्क्याह—**यदा चेति**। संज्ञासंज्ञिसम्बन्धविधिशून्येन लौकिकेनावयवशक्त्यनुसाररूपेणापि प्रकारेणोद्भिदादिपदानां विशेषवाचित्वाभ्युपगमे, तत एव विशेषसिद्धेर्धात्वानर्थक्यं प्रसज्येत। न च सामान्योक्त्या तस्यार्थवत्त्वम्, विशेषान्तर्भावेनैव सामान्यसिद्धेरित्यर्थः।

ननु यागविधिवाक्ये गुणस्यापि विधौ गौरवं स्यादित्याशङ्क्याह— **लाघवं चेति**। हेतुत्रयसङ्कलनार्थं तत्प्रतिपादकान् भाष्यावयवान् यदि गुणविधिरित्यादिभाष्योपेक्षणेन व्याख्यायोपेक्षितं यदीत्यादिभाष्येण तद्व्याचष्टे— **यद्येवमिति**। नेति ब्रूम इति परिहारभाष्यमाक्षेप्तुमवतारयति—**अत आहेति**। आक्षिपति—**नन्विति**। कर्मविध्यभावे गुणविध्ययोगादवश्यं कस्मिंश्चित् कर्मविधानेऽभ्युपगन्तव्ये ज्योतिष्टोमवाक्यसन्निधावितिकर्तव्यताम्नानात् तस्याश्च कर्तव्यत्वलिङ्गत्वात् 'भूयस्त्ववेनोभयश्रुति'त्यनेन न्यायेनास्य कर्मविधित्वं भविष्यतीति समाधत्ते— **गत्यभावादिति**। नन्वेवं सति ज्योतिष्टोमपदस्य का गतिरित्याशङ्क्य द्वेधा गतिमाह—**तद्व्यावृत्ते चेति**।

नन्वेवमपि तद्विकारभूतकर्मान्तराभावात् प्रकृतिशब्दो न युक्त इत्यन्यथाक्षिपति—**नन्वेवमिति**। समाधत्ते—**सिद्धान्तेति**। प्रस्तुताधिकरणसिद्धान्ते प्रकृतित्वानभिधाना- 'दव्यक्तासु तु सोमस्ये'त्यत्र वक्ष्यमाणस्य चोद्भिदादियागप्रकृतित्वस्योद्भिदादिशब्दानां गुणविधित्वाभिधानविरोधित्वेनानुद्भाव्यत्वादपरितोषेणान्यथा समाधत्ते **अथ वेति**। कथं दूरस्थे ज्योतिष्टोमे गुणविधिरित्याशङ्क्य —**ताण्डके**। ज्योतिष्टोमानन्तरमुद्भिदाद्याम्नानाद् गुणविधित्वेन चासम्बद्धपदाव्यवायाभावात् सर्वत्र ज्योतिष्टोमस्य प्रकृतत्वोपपत्तेस्तत्र गुणविधित्वसम्भवः प्रकृतित्वाभिधानेनोक्त इति भावः।

यदा त्वथैष ज्योतिरित्यादिवर्ज्जमुदाहरणमिति श्येनाधिकरणवक्ष्यमाणन्यायेन ज्योतिरादिशब्दानां गुणविधित्वाशङ्काविषयत्वं नेष्यते, तदा तेष्वपि गुणविध्युपपत्तेर्ज्योतिष्टोममात्रे गुणविधानाभिधानमयुक्तमित्याशङ्क्य 'प्रकृतौ वा द्विरुक्तत्वादिति न्यायं सूचयितुं तदपेक्षया प्रकृतित्वाभिधानमित्याह—**अथ वेति**। अव्यापारस्य व्यापारावच्छेदं विना विधेयत्वायोगात्तस्य च व्यापारवाच्याख्यातान्वयाधीनत्वात् कारकविभक्तिं च विनाख्यातान्वयायोगात् लोकसिद्धस्यैव च गुणस्यैव च कारकविभक्तिविनियोज्यत्वात् न स्वरूपज्ञापनार्थप्रातिपदिकार्थप्रधानप्रथमानिर्दिष्टस्य विधेयत्वं सम्भवतीत्याशयः। नन्वेवमपि ज्योतिष्टोमपदस्य नामधेयत्वं तद्वाक्येन फलसम्बन्धे व्यापृतेनापेक्षितायाः कर्मोत्पत्तेः सोमेन यजेतेत्यनेन करणादुत्पत्तिशिष्टेन सोमेन गुणविधित्वे वा, तस्य प्राप्ते कर्मणि गुणफलसम्बन्धरूपानेकार्थविधाने वाक्यभेदापत्तेर्ज्योतिष्टोमवाक्यस्यैव कर्मोत्पादकत्वात् उत्पत्तिशिष्टेन ज्योतिषां द्युतिमतामग्न्यादिद्रव्याणां स्तोमेन समुदायेन ज्योतिष्टोमशब्दावयवशक्त्यनुसारावगतेनावरोधाज्ज्योतिष्टोमे गुणविधानं न युक्तमित्यन्यथाक्षिपति—**नन्विति**। फलपदानुरोधात् फले गुणविधिप्रतीतेर्ज्योतिष्टोमाश्रितस्य गुणस्य फले विधानं भाष्यकृतोक्तमिति मत्वा तावत्समाधत्ते—**काम्यत्वाविति**। एवं तावदुद्भिदादिद्रव्येण यागमभिनिर्वर्तयेदिति सन्देहहेतुभाष्यस्योद्भिद्‌गुणता यागस्येति च पूर्वपक्षभाष्यस्याविहिते च कर्मणि तत्र गुणाविधानमनर्थकमित्याशङ्काभाष्यस्य चानुपपत्तिप्रसङ्गात्सर्वकाम्यप्राप्तपश्वादिफलानुवादकत्वेन च फलपदोपपत्तेरपरितोषादन्यथा समाधत्ते—**अथ वेति**। यद्यपि गुणविशिष्टं विहितं कर्मौत्पत्तिकेन गुणेन नैराकाङ्क्षयान्न तद्विरुद्धं वाक्यान्तरोपात्तं गुणान्तरं ग्रहीतुं शक्नोति, तथापि यजिना गुणरहितं स्वरूपमात्रं निष्कृष्याकाङ्क्षोत्थापनेन गुणान्तरं विहितं सन्नौत्पत्तिकाद्विशिष्यत इत्यध्याहृत्य यदि तथाशब्दकावपि शब्दावृत्त्या योज्यम् ॥ १ ॥

भा० प्र०—मीमांसा के प्रथम अध्याय के प्रथम पाद के पचीसवें सूत्र के अनुसार अर्थात् **"तद्भूतानां क्रियार्थेन समाम्नायः"** (१।१।२५) से सभी वेद क्रिया का प्रतिपादन करते हुए पुरुषार्थपरक होते हैं—यह कहा गया है। इसके अनुसार मन्त्र और अर्थवाद वाक्य का भी प्रामाण्य प्रतिष्ठापित हुआ है। इसमें अर्थवाद वाक्य विधेय कर्म के प्राशस्त्य का निर्देश करते हुए विधिवाक्य के साथ अन्वित होकर अङ्ग के रूप में सम्बद्ध होकर विधिवाक्यों के फल से ही फलवान् होते हैं। मन्त्र विधि वाक्य के द्वारा सूचित अनुष्ठान योग्य पदार्थों का अनुष्ठान के समय अर्थ का प्रकाश कर नियमविधि के अनुसार अपूर्व[1] का उत्पादन कर प्रयोजनवान् होता है।

---

१. प्रधान कर्म या अङ्ग कर्मों के सम्पादन से स्वर्ग आदि प्राप्ति के योग्य पुरुष या स्वर्ग आदि प्राप्ति के योग्य क्रतु नहीं है। इन दोनों की अर्थात् पुरुष और कर्म को फल के प्रति जो अयोग्यता है उसका निवारण कर योग्यता का सम्पादक पुरुषगत

प्रकृत में यह विचारणीय है कि उद्भिद् से याग करे, उद्भिदा यजेत' (ताण्ड्य ब्राह्मण १९।६।३) बलभिद् से याग कर 'बलभिदा यजेत' (ता० ब्रा० १९।६।१) विश्वजित् से यजन करे 'विश्वजिदा यजेत' (ता० ब्रा० १९।८।४) अभिजित् से याग करे 'अभिजिता यजेत' (ता० ब्रा० १९।८।४) अर्थात् 'अभिजिता वै देवा इमान लोकान्

---

या क्रतुगत अपूर्व मीमांसा शास्त्र में कहा जाता है। अन्यथा यज्ञ का सम्पादन असम्पादन के समान ही रहेगा।

कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा।
योग्यता शास्त्रगम्या या परा साऽपूर्वमुच्यते ।।

"प्रधानकर्मणामङ्गकर्मणां वा प्राक्करणात् स्वर्गादिप्राप्त्ययोग्याः पुरुषाः, क्रतवश्च स्वर्गकार्यायोग्याः। तदुभयीमप्ययोग्यतां व्युदस्य प्रधानैरङ्गैश्च योग्यतोपजन्यत इति अवश्यं सर्वेणाभ्युपगन्तव्यम्। असत्यां तस्यामकृतसमत्वप्रसङ्गात्। सैव च पुरुषगता क्रतुगता वा योग्यता शास्त्रेऽस्मिन्नपूर्वमित्युपदिश्यते" इति। (तं० वा० पृ० ३९४)।

वेद में स्वर्ग, पुत्र, पशु आदि फल साधन अनेक कर्म हैं। उन फलों की साधनता श्रुतिवाक्यों के द्वारा ही अवगत होती हैं। उन फलों के भोग के इच्छुक उन कर्मों का जब तक अनुष्ठान नहीं करते हैं, तब तक वह कर्तृत्व की उपलब्धि न करता है और उन फलों के भोग के योग्य ही होता है। इस कर्मनिष्ठ और पुरुषनिष्ठ अयोग्यता को दूर करने के लिए उन कर्मों का अपने अङ्गों के साथ अनुष्ठान करना चाहिए। इन कर्मों के अनुष्ठान करने पर भी क्षणिक होने के कारण बाद में होने वाले फल के प्रति वे साधन नहीं हो सकते हैं। क्योंकि, कार्य से अव्यवहित पूर्ववर्ती ही कारण होता है। स्वर्ण आदि जो कर्म के फल कहे गये हैं, वे अन्य जन्म में भोग्य हैं, अतः इसमें अनेक काल का व्यवधान अवश्यंभावी है। कर्म के अनुष्ठान के बाद ही पुत्र, पशु आदि उनके कार्य=फल की उत्पत्ति नहीं होती है। "चित्रया यजेत पशुकामः" "पुत्रकामः पुत्रेष्ट्या यजेत" आदि वचन-समूह सुने जाते हैं, अतः इनकी साधनता हो सके इसके लिए यत्न करना चाहिए। इसलिए फल की उत्पत्ति तक स्थिर रहने वाले जिस वस्तु विशेष की कल्पना की जाती है—वही अपूर्व है। अदृष्ट, शक्ति, अतिशय आदि इसी के अपर पर्याय हैं। यागादि क्रिया से उत्पन्न यह अपूर्व याग में आश्रित नहीं माना जा सकता है, क्योंकि आश्रयी के नाश के साथ ही इसका भी नाश हो जायेगा, अतः पुरुष में इसको आश्रित माना जाता है। मीमांसा में इसका विश्लेषण करते हुए लिखा गया है, सुख की इच्छा करता हुआ मनुष्य सुख के साधन का अन्वेषण करता है, अन्वेषण कर उसके सम्पादन के लिए प्रयत्नशील होकर उसके सभी व्यापारों का अनुष्ठान

अभ्यजयन्'। विश्वजिता विश्वमजयन्। इत्यादि विधिवाक्यों में उद्भिद्, बलभिद्, विश्वजित्, अभिजित् आदि पद क्रियायों के साथ अन्वित होकर ही फलवान् हो सकते हैं। इसमें यहाँ सन्देह होता है कि ये किस रूप में अर्थात् गुण के रूप में नामधेय

---

करता है। स्वर्गादि की कामना से अधिकारी पुरुष विशेष उसकी कामना करता है। यागादि की साधनता समझकर भी क्षणिक इस व्यापार से कालान्तर में होने वाले फल में विसंवाद की कल्पना कर उससे उत्पन्न व्यवहित काल में होने वाले फल पर्यन्त ठहरने वाले किसी पदार्थ की कल्पना कर उससे फल की प्राप्ति से विगत संशय हो जाता है। अतः, मीमांसा का मुख्यतम अवलम्बन अपूर्व है। इस अपूर्व को विहित कर्म के फल साधन के समान ही निषिद्ध कर्म के फल के साधन के रूप में नरकादि के जनक के रूप में कल्पना की जाती है। दोनों को ही अपूर्व शब्द से कहा जाता है। तन्त्रवार्त्तिक में कुमारिल ने कहा है—

शक्तिः कार्यानुमेयत्वात् यद् गतैवोपयुज्यते।
तद्गतैवाभ्युपेतव्या स्वाश्रयाऽन्याश्रयापि वा॥ (त० वा० पृ० ३९८)

आशय यह है कि जिस क्रम से अनुष्ठान होता है उसी क्रम से अपूर्व की उत्पत्ति होती है। अङ्गकर्मों के अनुष्ठान के अव्यवहित क्षण में ही उसके द्वारा यजमान की आत्मा में अपूर्व निष्पन्न होता है। इस प्रकार प्रधान याग से पूर्व में जितने अङ्गों का अनुष्ठान किया जाता है या जितने प्रधान कर्म के बाद अनुष्ठान किये जाते हैं, उतने अपूर्व उत्पन्न होते हैं। ये अङ्ग से उत्पन्न है, अतः अङ्गापूर्व कहे जाते हैं। इसी प्रकार प्रधान याग के अनुष्ठान से प्रधान से जो अपूर्व उत्पन्न होता है, उसको प्रधानापूर्व कहा जाता है इसे ही शास्त्र में उत्पत्त्यपूर्व भी कहा जाता है। ये सभी अपूर्व यजमान की आत्मा में समवेत होते हैं। अन्तिम अङ्ग के अनुष्ठान के बाद ये सभी अपूर्व मिलकर परमापूर्व स्वरूप अपूर्व का उत्पादन करते हैं। परम अपूर्व की उत्पत्ति के बाद अन्य सभी अपूर्व विनष्ट हो जाते हैं और यही परमापूर्व फल की उत्पत्ति तक रहता है और फल का उत्पादन कर विनष्ट हो जाता है। विजातीय फलों के उद्देश्य से अनुष्ठित कर्मों के द्वारा विजातीय फलों के उत्पादन की शक्ति से सम्पन्न अपूर्व उत्पन्न होते है, किन्तु इनके फल मे साङ्कर्य नहीं होता है। जैसे एक ही खेत में अनेक प्रकार के बीजों का साङ्कर्य नहीं होता है।

"शक्तयः सर्वभावानां नानुयोज्याः कथञ्चन"

अर्थात् भिन्न-भिन्न कर्मों से जन्य भिन्न-भिन्न फलों के उत्पादन से यजमान की आत्मा में समवेत फल मात्र से नाश्य अपूर्व है—यह मीमांसकों ने स्वीकार किया है।

के रूप में सम्बद्ध हैं, यजेत के साथ प्रयोग है। यागकरे यहाँ अर्थ भी व्यक्त है। उद्भिद् द्रव्य से याग करे इस रूप में अन्वय है, या उद्भिद् नाम के याग से यजन क्रिया करे। क्योंकि, सम्प्रदाय-परम्परा से प्रत्यक्ष वेदवाक्य के द्वारा लब्ध होने से ये निरर्थक नहीं हो सकते हैं, निरर्थक मानने पर अप्रामाण्य का प्रसङ्ग आयेगा। सम्पूर्ण वेदवाक्य का प्रामाण्य माना गया है। अतः ये भी प्रामाणिक हैं, अतः किस रूप में अन्वय है--यहाँ सन्देह उचित है। जहाँ विधि विहित कर्म में द्रव्य, देवता आदि का विधान होता है—उसका नाम गुण है। जिस वाक्य में वैसे द्रव्य देवता आदि जो विहित होते हैं—उसको गुणविधि कहा जाता है। अग्निहोत्र हवन करे 'अग्निहोत्रं' जुहोति' इस स्थल में दधि से हवन करे, 'दध्ना जुहोति' यहाँ गुणविधि का निर्देश है। अग्निहोत्र हवन के उद्देश्य से दही का द्रव्य रूप में गुण का विधान है। सामान्य रूप से इसका अनुष्ठान सम्भव न होने से याग-विशेष रूप विधि का विषय होता है।

नाम के बिना विशेष निरूपित नहीं हो सकता है, अतः, याग का नाम भी आवश्यक होता है। याग के नाम को नामधेय कहा जाता है। प्रकृत में पूर्वोक्त वेदवाक्य गुणविधि हैं या नामधेय है—यही सन्देह है। पूर्व में ही निर्दिष्ट किया गया है कि उद्भिद् आदि का 'यजेत' क्रिया के साथ दो प्रकार से अन्वय हो सकता है। उद्भिद् नामक द्रव्य के द्वारा याग निष्पन्न करे, 'उद्भिदा द्रव्येण यागमभिनिर्वर्त्तयेत्' इस रूप में अन्वय हो सकता है और नामविधि मानने पर उद्भिद् नाम के याग से अभिलषित फल की प्राप्ति करे, 'उद्भिदा यागेन इष्टं भावयेत्'—इस प्रकार अन्वय हो सकता है। ऐसी स्थिति में इसे गुणविधि की आशङ्का पूर्वपक्षी ने की है। क्योंकि, किसी विधि वाक्य की प्रशंसा की सूचना इससे न होने के कारण इसे अर्थवाद नहीं कहा जा सकता है। किसी अनुष्ठान योग्य कर्म के स्वरूप का प्रकाशन इससे नहीं हो रहा है, अतः, इसे मन्त्र भी नहीं कहा जा सकता है। मन्त्र और अर्थवाद न होने पर इसको विधि ही मानना पड़ेगा। क्योंकि विधि न मानने पर विफल होने से इसका अप्रामाण्य प्रसक्त होगा। मन्त्र, अर्थवाद और विधि को ही प्रयोजन समन्वित कहा गया है। विधि वाक्य होने पर भी उत्पत्ति विधि न होने से गुण विधि ही इसको मानना पड़ेगा। उत्पत्ति विधि उसे कहा जाता है जो वेद या शास्त्रवाक्य सर्वथा अज्ञात कर्म के विषय को कर्तव्य के रूप में बोधित करता है और जो अन्य वेदवाक्य से विहित कर्म में द्रव्य, देवता आदि के रूप में गुण का विधान करता है, वह उसकी गुण विधि है। प्रकृत में 'उद्भिदा यजेत' इस वाक्य में उद्भिद् आदि शब्द अन्य वेदवचन से विहित याग में उद्भिद् रूप गुण का विधान करता है—यह मानने पर शास्त्र की प्रसिद्धि के अनुसार दही से हवन करे 'दध्ना जुहोति' इसमें जैसे अन्य वचन से प्राप्त होम में दही रूप गुण का विधान होता है, उसी तरह यहाँ भी उद्भिद् रूप गुण का विधान होगा। जिसके द्वारा भूमि का उद्भेदन किया जाय वही उद्भिद् है इस व्युत्पत्ति के अनुसार

उद्भिद् शब्द का यौगिक अर्थ खनित्र होता है। इस स्थल में अन्य वचन से प्राप्त सभी फलों को देने वाले ज्योतिष्टोम नामक यज्ञ में पशु रूप फल के लिए खनित्र रूप गुण का विधान होता है, अतः, 'उद्भिदा यजेत पशुकामः' इत्यादि स्थल में उद्भिद् आदि शब्दों के द्वारा गुण का ही विधान करना उचित है, क्योकि इसी तरह इसका उपयोग हो सकता है, अन्यथा नहीं। इसका प्रयोजन प्रदर्शन न किया जाय तो समग्र वेद को पुरुषार्थ साधक नहीं कहा जा सकता है, क्योंकि, ये निरर्थक है। यह पूर्व पक्ष है।

वार्तिककार ने कहा है कि यह सूत्र स्वतन्त्र एक अधिकरण है, सम्पूर्ण प्रथम अध्याय में प्रामाण्य का ही विचार किया गया है, इसलिए यदि गुणविधि या नामधेय का विचार करने पर इस अधिकरण की अध्याय के साथ सङ्गति नहीं हो सकती है। इसलिए इस सूत्र में उद्भिद् आदि यह धर्म में प्रमाण है या अप्रमाण—इसी का विचार है। इनमें सिद्धान्त रूप में "उद्भिदा यजेत" आदि वाक्यों को विधि के अन्तर्गत मानकर उद्भिदा आदि पद विधि वाक्य में फल साधन करण है। याग के साथ सामानाधिकरण्य अर्थात् नामधेय रूप में ही यह अन्वित होता है, अत एव उद्भिदा, बलभिदा, विश्वाजिता आदि पद धर्म में प्रमाण है। इस पक्ष में सूत्र का अर्थ यह होगा— उक्तं समाम्नायैदमर्थ्यम् = समाम्नाय का वेद का ऐदमर्थ्यं = धर्मप्रतिपादन ही प्रयोजन है, क्योंकि ऐसा न होने पर स्वाध्यायविधि उपपन्न नहीं होगी। तस्मात् = इस कारण से सर्वम् = उद्भिदा आदि सभी पद समूह, तदर्थं स्यात् = धर्मप्रतिपादन रूप प्रयोजन के लिए हैं।

सामानाधिकरण्य से तात्पर्य उद्भिद् का साक्षात् यजन में सम्बन्ध सूत्रार्थः— उक्तम् = कहा गया है। समाम्नायैदमर्थ्यम् = समाम्नाय का = वेद का ऐदमर्थ्यम् = प्रयोजन। इदम् = यह अर्थं = प्रयोजन जिसका है, वह इदमर्थं हुआ, उसका भाव ऐदमर्थ्यं = यह प्रयोजन। तस्मात् = इस कारण से, सर्वम् = सभी वैदिक पदों को प्रयोजनवान् कहने के कारण, विधिवाक्य में स्थित सभी पद न सभी प्रयोजनों के द्वारा सार्थक होंगे, अन्यथा वेदवचन की अनर्थकता होने लगेगी ॥ १ ॥

## अपि वा नामधेयं स्याद् यदुत्पत्तावपूर्व-मविधायकत्वात् ॥२॥ सि० ॥

**शा० भा०—अपि वेति[1] पक्षो विपरिवर्तते[2]। नामधेयं स्यादिति प्रतिजानीमहे। एवमविहितमर्थं विधास्यति ज्योतिष्टोमाद् यागान्तरम्। श्रुतिश्चैवं यागमभिधास्यति।**

**इतरथा श्रुतिरुद्भिदादीन्वक्ष्यन्ती उद्भिदादिमतो लक्षयेत्—उद्भिद्वता यागेन कुर्यादिति। यागेन कुर्यादिति यजेतेत्यस्यार्थः[3]। करणं हि यागः, उद्भि**

१. ब. तु। २. ब. व्यावर्तते। ३. ब. यजेतेत्यस्य शब्दस्यार्थः।

दाद्यपि तृतीयानिर्देशात् करणम् । तत्रोद्भिदा यागेनेति कर्मनामधेयत्वेन[1] सामानाधिकरण्यसामञ्जस्यम् । द्रव्यवचनत्वे मत्वर्थलक्षणया सामानाधिकरण्यं[2] स्यात् । श्रुतिलक्षणाविषये च श्रुतिर्ज्यायसी । तस्मात् कर्मनामधेयम् ।

ननु प्रसिद्धं द्रव्यवचनत्वमपह्नूयेत, अप्रसिद्धं कर्मवचनत्वं प्रतिज्ञायेत । उच्यते । तृतीयानिर्देशात्कर्मवचनता । कुतः ? करणवाचिनो हि प्रातिपदिकात् तृतीया भवति । करणं च यागः । तेन यागवचनमिममनुमास्यामहे ।

नैतद्युक्तम् । यदि तृतीयानिर्देशे सत्युद्भिदादिभ्यः शब्देभ्यो यागे बुद्धिरुत्पद्येत, स्यादेतदेवम् । न हि नो बुद्धिरुत्पद्यते । तस्मादयुक्तम् । तृतीयावचनमन्यथा नोपपद्यत इति चेत् ? मोपपादि । न जातुचिदनवगम्यमानेऽपि यागवचनो भविष्यति । तस्माद् गुणविधयः । लक्षणेति चेत् ? वरं लक्षणा कल्पिता, न यागाभिधानम् । लौकिकी हि लक्षणा । हठोऽप्रसिद्धकल्पनेति ।

अपि च यदि नामधेयं विधीयते, न यागः । अथ यागो न नामधेयम् । उभयविधाने ह्युद्भिदादयः । कुतः प्राप्तिरिति चेत् ? ततोऽभिधीयते उच्छब्दसामर्थ्याद् भिच्छब्दसामर्थ्याच्चोद्भिच्छब्दः क्रियावचनः । उद्भेदनं=प्रकाशनं पशूनामनेन क्रियत इत्युद्भिद् यागः । एवमाभिमुख्येन जयादभिजित्, विश्वजयाद् विश्वजित् । एवं सर्वत्र । अतः कर्मनामधेयम् ।

यस्त्वप्रवृत्तिविशेषकरोऽनर्थक इति नामधेयमपि गुणफलोपबन्धेनार्थवत् । तस्मात् कर्मनामधेयान्येवंजातीयकानीति सिद्धम् ॥ २ ॥ सिद्धम् ॥

इति प्रथममधिकरणम् ।

भा० वि०—ननु नामधेयत्वपक्षसंभवेऽपि कथं स एवेति नियम इत्याशंक्य—यदपूर्वमिति । पदद्वयं व्याचष्टे एवमिति । नामधेयत्वे हि सत्युद्भित्पदं ज्योतिष्टोमयागाद्यागान्तरमविहितं विधास्यति, इतरथा विहिते कर्मणि गुणमात्रविधिः स्यात्, स च विशिष्टविहितकर्मस्वरूपमात्रानुवादानुपपत्तेरयुक्त इति भावः । अत्रैवमित्यनेन यच्छब्दो यस्मादर्थे व्याख्यातः अविहितमित्यनेननापूर्वपदं वाक्यान्तरानधिगते व्याख्यातम् । इदानीमस्तु तर्हि गुणविशिष्टकर्मान्तरविधानार्थमितिशङ्कानिरासार्थमुत्पत्ताविति पदं यच्छब्दावृत्त्या यस्मादुत्पत्तौ विधास्यतीति व्याकुर्वन् नामधेयत्वे हेत्वन्तरमाह—श्रुतिश्चेति । उद्भित्पदश्रुतिः नामधेयत्वे यागमभिधास्यति-मुख्यवृत्त्यैव प्रतिपादयिष्यतीत्यर्थः । उत्पत्तिशब्दोऽपि च प्रथमभावविकारवचनः प्राथम्यगुणयोगेन शब्दवृत्तिषु प्रथमभूतश्रुतिवचन इति भावः । गुणविधित्वे तद्व्यतिरेकमाह—इतरथेति । विधानाय खनित्रादीन्

---

१. ब. कर्मनामधेयत्वे सामा ।  २. ब. करण्येन ।

वक्ष्यति—यजिसामानाधिकरण्यार्थं च तद्वतो यागानुद्भिद्वता यागेनेति लक्षयेत्, इत्युद्भित्पदस्य मुख्यलक्षणावृत्तिद्वयप्रसङ्गः, यागस्य च लक्ष्यत्वप्रसङ्ग इत्यर्थः। एवं प्रातिपदिकसामर्थ्यान्नामधेयत्वमभिधाय विभक्तिसामर्थ्यादप्येवमिति वक्तुमाख्यातपदार्थं तावदाह—**यागेनेति**।

ननु पूर्वपक्षे यागमुद्भित्पदेति संबन्धः, न तु यागेन कुर्यात् इति, तत्राह—**करणं होति**। अपूर्वसाधनत्वेनान्यतः प्राप्तमनूद्य गुणविधाने प्राप्त्यनुसारेण यागेन कुर्यादित्येवानुवादः स्यादित्याशयः। अस्तु करणत्वेन प्राप्तस्यानुवादादिहापि करणत्वं यागस्य। उद्भिदर्थस्य तु किमायातम्। अत आह—**उद्भिदपीति**। ततः किमत आह—**तत्रेति**। भिन्नार्थयोरुद्भिद्यागपदयोरेकार्थवृत्तित्वलक्षणसामानाधिकरण्यानुपपत्तेः यागनामत्वमेवोद्भित्पदस्य सामानाधिकरण्यसामञ्जस्यायाप्युपेतव्यमित्यर्थः।

ननु द्रव्यवाचित्वेऽप्युद्भिद्वता यागेनेति स्यादेव सामानाधिकरण्यमित्याशङ्क्य लक्षणापत्तेः मैवमित्याह—**द्रव्यवचनत्व इति**।

ननु लक्षणापि शब्दवृत्तिरेव, तत्राह—**श्रुतीति**। यस्मात्कर्मनामधेयत्व एव तृतीयावगतकरणत्वोपपत्तिः, तस्मादित्युपसंहरति—**तस्मादिति**।

ननु नामधेयत्वेऽपि नैव प्रमाणमवयवप्रसिद्धमूर्ध्वविदारणसमर्थद्रव्यवचनत्वमपह्नुत्या प्रसिद्धं कर्मार्थत्वमभ्युपगम्येतेति चोदयति—**नन्विति**। सामानाधिकरण्यं तु 'व्रीहिभिर्यजेत' 'सोमेन यजेत' इत्यादाविवाकर्मनामत्वेऽपि सम्भवतीति न प्रमाणमितिभावः। पिकः कोकिल इत्यादौ प्रसिद्धार्थपदसामानाधिकरण्येनाप्रसिद्धार्थनिर्णयदर्शनाद् व्रीह्यादिवच्च बलवद्बाधकविपरीतप्रत्ययाभावात् तृतीयानिर्देशोऽत्र कर्मनामत्वे प्रमाणमेवेति परिहरति—**उच्यत इति**। कथमुद्भित्प्रातिपदिकस्य तृतीयान्तत्वमात्रेण कर्मनामत्वमिति चोदयति—**कुत इति**। उत्तरमाह—**करणवाचिन इति**। करणत्वं नाम क्रियोत्पादनसामर्थ्यम्, तदाश्रयोऽत्र लक्षणया करणमभिप्रेतम्। प्रातिपदिकस्य करणवाचित्वानभ्युपगमात्, ततः किमित्यत आह—**करणं चेति**। यागस्य हि भावार्थाधिकरणन्यायेनास्मिन् वाक्ये करणत्वमवगतम्, तत्र यद्युद्भित्पदमपि तृतीयान्तं यागवाचकं तदा सामानाधिकरण्येनैकवाक्यतां यास्यति नेतरथेति, तस्यापि यागार्थत्वमनुमास्याम इत्यर्थः, प्रत्यक्षबाधितत्वान्नेदमनुमानं युक्तमिति चोदयति—**नैतद्युक्तमिति**। तृतीयानिर्देशेऽपि द्रव्यवाचित्वानुभवात् कर्मवाचित्वानुभवाच्चायुक्तं तृतीयया कर्माभिधायित्ववचनमित्यर्थः, यागवाचित्वाभावे करणभूतयागपदैकवाक्यत्वविशिष्टतृतीयान्तता नोपपद्यत इति चोदयति—**अन्यथेति**। अन्यथानुपपत्तिमात्रेणानवगम्यमानं यागवचनत्वं न शक्यं कल्पयितुमिति परिहरति—**काममिति**।

उपपत्तिश्च सोमेनेत्यादाविव कल्पनीयेति भावः, यागवचनत्वाभावफलमाह—**तस्मादिति**। गुणविधित्वेऽपि मत्वर्थलक्षणादोषोऽस्त्येवेति सिद्धान्त्याह—**लक्षणेति चेदिति**। पूर्वपक्षी दूषयति—**वरमिति**। कथं लक्षणाया एव वरत्वं नाभिधानकल्पनायास्तत्राह—**लौकिकी हीति**। लोकप्रसिद्धेति यावत्। हठः—स्वच्छन्दव्यवहारः। स्वबुद्धिमात्रप्रभवाभिधानकल्पनेति यावत्।

ननूद्भिच्छब्दस्य यागनामत्वं लोकाप्रसिद्धमप्यनेनैव विधीयतामत आह—**अपि चेति याग न इति**। विधीयेतेत्यनुषङ्गः, अतश्च नामिनोऽप्रसिद्धत्वान्नामधेयत्वविधानासम्भव इति भावः। यागेन पशून् भावयेत् तस्य च यागस्य चोद्भिदिति संज्ञेत्युभयविधानेऽर्थभेदाद्वाक्यभेदः स्यादित्याह—**उभयविधान इति**।

अत्र नैतद्युक्तमित्यादिनाऽप्रसिद्धकल्पनेत्यन्तेन यत्प्रत्यक्षविरुद्धाप्रसिद्धार्थकल्पनं दूषणमुक्तम् तदविधायकत्वादिति सूत्रावयवं व्याकुर्वन् परिहरति—**न नामधेयमिति**। नोद्भिच्छब्दस्याप्रसिद्धमेव यागनामत्वं करणभूतयागैकवाक्यत्वविशिष्टतृतीयान्तत्वेन ज्ञाप्यते, येन प्रत्यक्षविरोधः स्यादित्यर्थः। किं तर्हि क्रियत इत्यत आह—**अनुवादा हीति**। अनूद्यन्त इत्यनुवादाः। अन्यतः प्राप्तुमुद्भिदादीनां कर्मनामत्वमनुवाद्यम्, अतस्तदनूद्य द्रव्यकर्मवाचित्वसन्देहनिरासमात्रं सामानाधिकरण्येन क्रियत इत्यर्थः।

ननूद्भिदादिशब्दस्य लोके कर्मण्यप्रयोगात् कुतः प्राप्तिरित्याह—**कुत इति**। समुदायप्रसिद्ध्यभावेऽपि अवयवप्रसिद्धिमुपपादयन् परिहरति—**तत इति**। चकारः क्विप्प्रत्ययसामर्थ्यं समुच्चयार्थः।

ननु यागक्रियायाः खनित्रादिवद्विदारणकर्तृत्वाभावात् कथमुद्भित्पदाभिधेयत्वमत आह—**उद्भेदनमिति**। विदारणस्य क्वचिदवस्थितवस्तुप्रकाशनार्थत्वदर्शनेनोपचारादुद्भिच्छब्दः पशुप्रकाशककर्मणि प्रयुक्त इत्यर्थः। न चैवं ज्योतिष्टोमादीनामपि फलप्रकाशकत्वात् उद्भिच्छब्दता, यत्रायमुद्भिच्छब्दो वेदे प्रयुक्तस्तत्रैवास्य क्विप्प्रत्ययान्तस्य साधुत्वाभ्युपगमात् यथा डो प्रत्ययान्तस्य गमनकर्तृवाचिनो गोशब्दस्य सास्नादिमति प्रयुक्तस्य तत्रैव साधुत्वमितिभावः। अवशिष्टयोरप्यवयवप्रसिद्ध्या नामत्वप्राप्तिमाह—**एवमिति**। बलभिदादिष्वपि प्रसिद्धिप्रकारमतिदिशति—**एवं सर्वत्रेति**। यस्मादवयवप्रसिद्धिः कर्मण्यपि संभवति तस्मात्सामानाधिकरण्येन कर्मनामधेयत्वं निश्चीयत इति उपसंहरति—**तस्मादिति**। एवं तावदप्रसिद्धिकल्पना निराकृता। अथ यदुक्तोऽपि चेत्यादिनोभयविधाने वाक्यं भिद्येतेत्यन्तेन तदुत्तरत्वेनापि न नामधेयमित्यादि भाष्यमावृत्त्या योजयितव्यम्। तत्र हि यदि यागेन पशून् भावयेत्, स च याग उद्भित्संज्ञक इति साध्यसाधनसंबन्धसंज्ञासंज्ञिसंबन्धरूपौ द्वावर्थौ विधीयेयातां, ततो वाक्यभेदः

स्यात्, न त्वेतदस्तिसंज्ञासंज्ञिसंबन्धस्यान्यतः प्राप्तत्वेनानूद्यमानत्वादित्युक्तमुद्भिदादय इत्यन्तेन। अनुवाद्यस्य सामानाधिकरण्यानुगृहीतावयवप्रसिद्ध्या प्राप्तिः कुतः इत्यादिना प्रतिपाद्यते। वाक्यभेदाभावफलं तस्मादित्यादिनेति विवेक्तव्यम्।

एवं कर्मण्यप्रसिद्धिनिरासेन नामधेयत्वं व्युत्पाद्य, नामधेयत्वे परोक्तमप्रवृत्तिविशेषकरत्वेनानर्थक्यमनुवदति—**यत्त्विति**। विधायकादिप्रवृत्तिविशेषकरत्वं दर्शयन् दूषयति—**नामधेयमिति**। 'समे दर्शपूर्णमासाभ्यां यजेते'ति गुणोपबन्धः, दर्शपूर्णमासाभ्यां स्वर्गकाम इति फलोपबन्धः। कर्मणि गुणफलोपबन्धविधानाय कर्मस्वरूपाभिधानार्थमर्थवदित्यर्थः। यद्यप्युद्भित्पदं न गुणफलोपबन्धविधानार्थम्, किन्तु प्रकृतज्योतिष्टोमादस्य यागान्तरत्वं तत्रैव फलविधिशङ्कानिरासाय दर्शयितुं तथाप्येवमविहितमिति भाष्येणास्यार्थस्य दर्शितत्वात् नामधेयान्तरप्रयोजनमत्रोक्तमिति वेदितव्यम्। अधिकरणार्थमुपसंहरति—**तस्मादिति**। एवंजातीयकानि यौगिकत्वे सति धातुसामानाधिकरण्येन निर्दिष्टानीत्यर्थः ॥२॥

इत्युद्भिदधिकरणम्।

त० वा०—**यत्** उत्पत्तौ=प्रथमज्ञानेऽर्थान्तरपूर्वकत्वेनैकान्ततो न प्रसिद्धमुद्भिदादि तत् वैदिकव्यवहारे प्रथमोपनिपातात्सामानाधिकरण्येन नामधेयं स्यात्।

अथवैवमपूर्वं कर्म विदधदर्थवद्भविष्यति।

अथ वा कस्य नामधेयमिति सन्देहे अभिधीयते। यस्योत्पत्तावपूर्वं निष्पद्यते। यागस्येत्यर्थः। किं कारणम्—

गुणो विधीयमानो हि फले कर्मणि वा भवेत्।
विशिष्टविधिबुद्ध्या वा सर्वथा च न युज्यते ॥

फलं प्रति तावद्विधीयमाने परपदसम्बन्धविधानम्, व्यवहितकल्पना, धातोः पारार्थ्यम्, औत्पत्तिकसोमबाधः, अनदनीयेन खनित्रादिनाऽत्यन्ताप्रसिद्धेन याग इति दोषः।

तथा यागं प्रति गुणविधौ फलपदानर्थक्यम्, सार्वकाम्यप्राप्तज्योतिष्टोमविशेषणत्वे वाक्यभेदः, प्रत्ययव्यापारविप्रकृष्टता, धातुपारार्थ्यानदनीययागसोमबाध-विकल्पाश्चात्यन्तायुक्ताः।

तथा विशिष्टविधौ सर्वपारार्थ्यम्, अनेकविधिशक्तिकल्पना, मत्वर्थलक्षणा, गम्यमानसामानाधिकरण्यत्यागः, अनदनीययागश्चेति दोषाः। तस्मान्न गुणविधिः। तद्दर्शयति—**इतरथा श्रुतिरुद्भिदादीन् वक्ष्यति, तद्वतो लक्षयेत्**।

**वक्ष्यन्तो लक्षयेत्** इति वा ग्रन्थः। प्रातिपदिकसामर्थ्यमुक्त्वा विभक्तिसम्बन्धादप्येतदेवावगम्यत इति दर्शयति— **यागेन कुर्याद्** इत्यादिना।

किं च—

विधाने चानुवादे च यागः करणमिष्यते।
तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति॥

**यत्करणाभिधायिन्या तृतीयया** इत्येवमादिषु कारकाणां विभक्त्यर्थत्वाभ्युपगमात्कथं **करणवाचिनो हि प्रातिपदिकादि**त्युच्यते। नैष दोषः। करणाश्रयवाचिनो हीत्यभिप्रायः।

अथ वा करणशब्दो यादृशमर्थं ब्रवीति, तादृशस्य प्रातिपदिकं वाचकमेव। कृदन्तेन हि कारकविशिष्टं द्रव्यमेवोच्यते, न विभक्तिवन्निष्कृष्टा शक्तिः। तथा च कारकं करणेन करणायेति च कारकान्तरयोगो दृश्यते। अन्यथा हि विभक्त्यभिहितेनैवैकेन कारकेन वशीकारान्न द्रव्यं कारकान्तरयोगं प्रतिपद्येत। शक्तेस्तु शक्त्यन्तरं नास्त्येव। तस्माच्छक्त्युपसर्जनद्रव्यवचनत्वात्कृदन्तानामुपपन्नं करणशब्दार्थवाचित्वं प्रातिपदिकस्य। तेनैतदुक्तं भवति। यदस्मिन् वाक्ये करणम्; तद्वाचिनः प्रातिपदिकात्तृतीययोत्पत्तव्यम्, यागश्चात्र फलभावनायाः करणम्, द्रव्यमिति वक्ष्यति। ततश्च यद्युद्भित्पदं यागवचनमेवं तृतीयान्तं सदेकवाक्यतां यास्यति, अर्थान्तरवचनत्वे[1] त्वसम्बद्धं स्यात्।

ननु च—

प्रत्यक्षं द्रव्यवाचित्वमुपन्यस्तं कथं पुनः।
करणत्वानुमानेन बाध्यते व्रीहिसोमवत्॥

**यथैव** 'व्रीहिभिर्यजेत, सोमेन यजेत' इत्यादीनां करणभूतयागैकवाक्यत्वे सति तृतीयान्तत्वं वैयधिकरण्येऽप्यविरुद्धमेवमिहापीति। **हठ इति**। चिरन्तनतडागोदकाच्छादितहारितद्रव्यमुच्यते। यथा तदुत्सार्यमाणमपि स्वच्छन्दतः पुनःपुनरुदकं छादयति, एवं योऽन्योऽपि स्वच्छन्दव्यवहारः स हठ इति प्रसिद्धः।

**दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यमुखेनोद्भिच्छब्दस्य नामत्वम्**

तदुच्यते—

पदमज्ञातसंदिग्धं[2] प्रसिद्धैरपृथक्श्रुति।
निर्णीयते निरूढं तु न स्वार्थादपनीयते॥

व्रीह्यादयो ह्यत्यन्तरूढाः ते स्वार्थमपरित्यजन्तः सामानधिकरण्यमप्रतिपद्यमाना गत्यन्तराभावद् गुणविधयो विज्ञायन्ते। ये पुनरुद्भिदादयो यौगिकाः तेषां

---

१ क. (टिप्पण्यां) विषयत्वे। २ क. संबमधं।

येनैव प्रकारेण यत्नेन द्रव्यवचनत्वम्, तेनैव कर्मवचनत्वमप्युपपद्यत इति प्रत्यक्षप्रसिद्धावनुदासीनायामनुमानेनाप्यज्ञानसंशयव्युदासकरणं न दुष्यति। सर्वशब्दार्थावधारणे ह्ययमभ्युपायो—यत्प्रसिद्धपदसामानाधिकरण्यं नाम। प्रधानं च करणत्वं यागे लब्धात्मकं शक्नोति प्रातिपदिकमात्मविषयमापादयितुम्।

किं च—

> विभक्त्यर्थानुवादाच्च विधेः स्यान्नाम्नि लाघवम्।
> गुणपक्षे विधेयत्वं संख्याकारकयोरपि॥

**गुणविधौ गौरवं, लाघवं नामत्वे इति कथनम्**

त्वत्पक्षे ह्यवश्यं काचिद्विभक्त्यर्थेऽपि प्रत्ययस्य विधिशक्तिः कल्प्या स्यात्। तस्मादवयवद्वारेणाऽस्ति कर्मण्यपि प्रसिद्धिः ज्योतिष्टोमादेरपि स्वफलोद्भेदनकारित्वादेतन्नामप्रसङ्ग इति चेत्? न। सामानाधिकरण्यावधारितविषयविशेषस्यावयवान्वाख्यानात्। न चास्य ज्योतिष्टोमादिभिः समभिव्याहारोऽस्ति।

अथ वाऽर्थापत्तिवशेनैतद्विशेषविषयमेवोद्भेदनं निमित्तम्। न चान्यत्र तदस्तीति व्यवस्था। यथा सास्नादिमद्गतगमनविशेषनिमित्तत्वं[1] गोशब्दस्य। **अविधायकत्वादित्यस्य व्याख्या न नामधेयं विधायिष्यत** इति संज्ञासंज्ञिसंबन्धरूपेण 'वृद्धिरादैच्' (पा० सू० १।१।१) इत्यादिवदविधानम्, सामानाधिकरण्यावयवप्रसिद्धिभ्यां तत्सिद्धेः। न तु नामधेयार्थो न विधीयते, तदधीनत्वाद्यागविशेषसिद्धेः। इह हि यद्यपि संज्ञासंज्ञिसामानाधिकरण्यं नास्ति, तथाऽप्यात्मरूपव्यवच्छिन्नमेवार्थं गमयतीति विशेषणविशेष्यभावान्न भिद्यते।

नन्वेवं शब्दस्वरूपाभिधानं प्रसज्येत। प्रत्यक्षावगतस्वरूपविशिष्टार्थाभिधानादप्रसङ्गः। सर्वत्र ह्यगृहीतविशेषणा विशिष्टबुद्धिर्न दृष्टा, न त्वनभिहितविशेषणा। न चैतावता शब्दस्वरूपारोपप्रसङ्गः। तदनुरोधेन विद्यमानर्थांशविशेषोद्धरणादित्युक्तं प्राक्। नाम्नैव चैवमादीनां प्रकृतितो भेदः अन्यथा हि तदनवच्छिन्नो यजिर्गुणफलाद्यर्थं पुनः श्रुतिः प्रकृतिगामित्वान्नैव कर्म भिन्द्यात्।

अथ वा सर्वनामधेयेषु किंचिदर्थगतमपि विशेषणमस्तीत्यरुणैकहायन्यादिवदेव विशेषणविशेष्यता। न च यज्युच्चारणमन्तरेणाऽस्य यागविशेषनामत्वमिति, न सामान्यस्यानर्थकत्वम्। परस्परसंनिधानेन हि नामापि यागविषयम्, यागोऽप्येतदवच्छिन्नः, न सामान्यमात्रं प्रकृतो वेति लभ्यते। तस्मादुभयोरर्थवत्ता, विशिष्टभावनाविधा[2]नाच्चोभयोरपि[3] विधानमिति, नानुवादत्वम्।

---

१. निमित्तत्वात्। २ क. विधिना (टिप्पण्यां)।
३. क. (टिप्पण्यां) विशिष्टविधिना चोभयो।

व्याकरणशास्त्रेऽपि द्विदेवत्यत्वव्यवहारोऽस्तीत्याह—**तथेति**। देवता द्वन्द्वे चेत्(६–२–१४१)अधिकृत्येदग्नेः सोमवरुणयोरि(६–३–२७)ति सोमशब्दे वरुणशब्दे च परभूतेऽग्निशब्दस्य देवताद्वन्द्वनिमित्तमीत्वं स्मृतम्। मूर्द्धन्याधिकारे चाग्नेः स्तुत्स्तोमसोमा(८–३–८३) इत्यत्राग्निशब्दात्परस्य सोमशब्दस्य मूर्द्धन्यादेशेन षत्वस्मृतेः। सोमशब्दस्याग्निशब्दाद्भेदावगमादर्थाद्देवताद्वन्द्वावगतिः, आदिशब्दात् पूर्वपदप्रकृतिस्वराधिकारे उभे वनस्पत्यादिषु युगपदित्यनुवर्त्तमाने देवता द्वन्द्वे चेत्यनेनेन्द्रासोमाविन्द्रावरूणावित्यादिषूभयपदप्रकृतिस्वरत्वं वृद्ध्यधिकारे च हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्यनुवर्त्तमाने देवता द्वन्द्वे चेत्याग्नावैष्णवादिशब्दे उभयपदवृद्धिः आनङृतो द्वन्द्व इति वानुवर्त्तमाने देवताद्वन्द्वे चेत्यानङादेशः। ननु व्याकरणस्यार्थे तात्पर्याभावाच्च ततो द्विदेवत्यत्वावधारणं भवतीत्याशङ्क्याह—**यदि चेति**। तद्धितोच्चारणे देवतात्वप्रतीतिस्तदभ्युपगमे द्वित्वमपि प्रतीत्यविशेषादभ्युपगन्तव्यमित्याह—**अथेति**।

ननु वाक्यभेदादिदोषापत्तेः समासस्यार्थरहितस्यान्वाख्यानात्समासकार्यस्वरलक्षणशब्दसंस्कारमात्रसिद्ध्यर्थं तद्धितान्तेषु शब्देषु द्वन्द्वस्मृतेः प्रामाण्यं कल्प्यते। न द्विदेवत्यवसिद्ध्यर्थमित्याशङ्क्याह—**एतेनेति**। एतेन—अर्थद्वयावगमेन हेतुना स्वरसंस्कारमात्रसिद्ध्यर्थत्वकल्पना न युक्तेत्यर्थः। अश्वकर्णादिवैषम्यमुपपादयति—**तथा हीति**। नविन्द्रेऽपि महत्त्वगुणयोगस्य प्रमाणान्तरेणासंवादान्महेन्द्रशब्देऽपि समासान्वाख्यानं स्वरसंस्कारमात्रार्थं स्यादित्याशङ्क्याह—**महदिति**। महाब्राह्मण इत्यादौ महच्छब्दस्य पूज्यत्वाख्यगुणवाचित्वावगमादिन्द्रशब्दस्य च स्तवनीयसूक्तादिना देवताविशेषवाचित्वावगमादवयवयोरर्थवत्त्वं विशेषणविशेष्यरूपार्थवाचित्वं च तावत्सिद्धमेवेत्यर्थः।

नन्वेवमपीन्द्रे महत्त्वगुणयोगे प्रमाणाभावाद्विशिष्टवाचिता महेन्द्रशब्दस्य न युक्तेत्याशङ्क्याह—**तत्रेति**। निर्दोषवन्नृसावयवार्थशब्दप्रयोगान्यथानुपपत्तिरेवेन्द्रमहत्त्वगुणयोगे प्रमाणमित्याशयः। न चाश्वकर्णादिवद्योग्यानुपलब्धिर्विशिष्टार्थबुद्धेर्बाधिकास्तीत्याह—**न चेति**। ननु समुदायप्रसिद्धिरेवावयवप्रसिद्धेर्बाधिका भविष्यतीत्याशङ्क्याह—**न चेति**। समुदायशक्तिकल्पनाहेतोरवयवार्थाभावस्यानिश्चयात्समुदायप्रसिद्धेरात्मलाभानुपपत्तेर्बाधकत्वं न सम्भवतीत्यर्थः। नन्ववयवार्थाभावानिश्चयेऽपि सद्भावस्याप्यनिश्चयात् समुदायप्रसिद्ध्यात्मलाभो भविष्यतीत्याशङ्क्याह—**न चेति**। अन्यथानुपपत्तिकल्प्यवाच्छक्तेरवयवार्थाभावानिश्चयेऽन्यथानुपपत्तेरनिश्चयान्न शक्तिकल्पना शक्येत्याशयः।

अतिक्लेशापत्तेरपि शक्त्यन्तरकल्पना न युक्तेत्याह—**किं चेति**। श्लोकं व्याचष्टे—**प्रत्यक्षेऽपीति**। परव्याख्यादूषणमुपसंहरति—**तस्मादिति**।

ननु क्रमेण युगपद्वा वृत्तिद्वययोगादवयवव्युत्पत्तिर्न सम्भवतीत्युक्तमत आह—**न चेति**। क्रमवृत्तावसामर्थ्यं परेणानुक्तमपि तद्धितपूर्वत्वे वस्तुतोऽसामर्थ्यात्समासपूर्वत्वेऽप्यसामर्थ्यशङ्कापत्तेः, तन्निरासार्थं निरस्तं समासवेलायामिन्द्रशब्दस्य तद्धितापेक्षत्वेऽपि